## तृतीयं ब्राह्मणम्

त्वष्टा हतपुत्रोऽभिचरणीयमपेन्द्रꣳ सोममाहरत्तस्येन्द्रो यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्स विष्वङ् व्यार्च्छत्तस्य मुखात्प्राणेभ्यः श्रीयशसान्यूर्ध्वान्युदक्रामंस्तानि पशून्प्राविशंस्तस्मात्पशवो यशो यशो ह भवति य एवं विद्वान्त्सौत्रामण्याभिषिच्यते ततोऽस्मा एतमश्विनौ च सरस्वती च यज्ञꣳ समभरन्त्सौत्रामणीं भैषज्याय तयैनमभ्यषिञ्चंस्ततो वै स देवानाꣳ श्रेष्ठोऽभवच्छ्रेष्ठः स्वानां भवति य एनयाऽभिषिच्यते॥१॥

कृष्णाजिनेऽभिषिञ्चति यज्ञो वै कृष्णाजिनं यज्ञ एवैनमेतदभिषिञ्चति लोमतश्छन्दाꣳसि वै लोमानि छन्दः स्वेवैनमेतदभिषिञ्चति॥२॥

आसन्द्यामभिषिञ्चत्यासन्दीसद्वै साम्राज्यꣳ साम्राज्येनैवैनꣳ साम्राज्यं गमयति॥३॥

औदुम्बरी भवत्यूर्ग्वा उदुम्बर ऊर्ज्येवाध्यभिषिच्यते जानुसम्मिता भवति जानुसम्मितो वा अयं लोकोऽस्मा उ वै लोकाय क्षत्रियोऽभिषिच्यते क्षत्रमु वा एष भवति यः सौत्रामण्याऽभिषिच्यते तस्माज्जानुसम्मिता परिमिता तिरश्ची॥४॥

राष्ट्रं वा आसन्द्यपरिमितसमृद्धमु वै राष्ट्रं मुञ्जविवयना भवति यज्ञिया हि मुञ्जा द्वा उत्तरस्यां वेद्यां पादौ भवतो द्वौ दक्षिणस्यामयं वै लोक उत्तरा वेदिर्दक्षिणा पितृलोकस्तदेन-मुभयोर्ल्लोकयोरध्यभिषिञ्चत्येतद्ध स्म वै तद्विद्वानाह गौरीवीतिः[1] शाक्त्यः क्षत्रमिवाह किल वयममुष्मिँल्लोके भविता स्म इति शश्वद्धास्मा ऋषभो याज्ञतुरः प्रोवाच श्विक्नानाꣳ राजा॥५॥

स आसन्दीमास्तृणाति क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसीति क्षत्रस्य वा एषा नाभिः क्षत्रस्य योनिः[2]॥६॥

१. गोरीवीतिः TE

२. क्षत्रस्य योनि रसि क्षत्रस्य नाभिरसीति क्षत्रस्य वा एषा योनिः क्षत्रस्य नाभिः MD

**BRĀHMAṆA III**

**1.** Tvaṣṭā, when his son was killed, fetched *Soma* capable of witchery after making it inaccessable to Indra. Indra forcefully desecrated the sacrifice and drank the *Soma* juice. He then wandered in all directions. From his mouth and *Prāṇas*, his prosperity and fame flowed out ( and entered the cattle). Hence cattle stand for fame. Knowing this, he who consecrates by *Sautrāmaṇī* becomes famous. Then the two Aśvins and Sarasvatī organised this (*Sautrāmaṇī*) sacrifce for him; for healing him. They consecrated him with that (*Sautrāmaṇī*). Then only he became the supreme among the gods. So he who consecrates by this becomes supreme among his clan.

**2.** He consecrates him (seated) on a black antelope-skin; for a black antelope-skin is the sacrifice. Thus it is at the sacrifice, he consecrates him. On the hairy side (of the skin he seates him) because the hairs are the sacred verses (metres). Thus he consecrates him on the sacred verses (metres).

**3.** He consecrates him (seated) on a throne-seat, for throne-seat is the symbol of imperial authority. By means of imperial authority he makes him win imperial power.

**4.** It (the throne seat) is made of *Udumbara* wood. *Udumbara* is energy. He consecrates him (seated) on energy. It is knee-high and this terrestrial world is knee-high and it is to rule over this world that a *Kṣatriya* is consecrated. The one who is consecrated by *Sautrāmaṇī* becomes the ruling power. Therefore it (the throne-seat) is knee-high and of unlimited width.

**5.** The throne-seat is (symbol) of the empire and empire is unlimited sway. It is covered with a cushion of *Muñja* grass; and *Muñja* grass are sacred for sacrifice. The two legs (of the throne-seat) are in the northern *vedī* and two in the southern *vedī* . This terrestrial world is the northern *vedī* and the southern one is *Pitṛloka* (the world of the *Pitṛs*). Thereby he consecrates him over both these worlds. This is what that learned Gaurivīti Śāktya said - "As rulers, we shall be in that yonder world." Very often the king of *Śviknas*, named Ṛṣabha Yājyñatura had said so.

**6.** He places the throne seat (saying) "You are the navel of the *Kṣatra*", which means you are the womb of the *Kṣatra*. This (seat) which is the navel of the *Kṣatra* is indeed the yoni or womb of the *Kṣatra*.

अथैनां कृष्णाजिनेनास्तृणाति मा त्वा हिꣳसीन्मा मा हिꣳसीरिति यज्ञो वै कृष्णाजिनं यज्ञस्य चैवात्मनश्चाहिꣳसायै॥७॥

अथाधिरोहति वारुण्यर्चा वरुणो वै देवानाꣳराजा स्वयैवैनमेतद्देवतयाऽभिषिञ्चति निषसाद धृतव्रतो वरुणः पस्त्यास्वा। साम्राज्याय सुक्रतुरिति॥८॥

अथ सुवर्णरजतौ रुक्मौ व्युपास्यति मृत्योः पाहि विद्योत्पाहीति वृष्टिर्वै विराट्तस्या एते घोरे तन्वौ विद्युच्च ह्रादुनिश्च ततः सुवर्ण एव रुक्मो विद्युतो रूपꣳ रजतो ह्रादुनेस्ताभ्यामेवास्मै देवताभ्याꣳ शर्म यच्छति तस्मात्सौत्रामण्येजानस्यैताभ्यां देवताभ्यां न शङ्का भवत्यथो य एवमेतद्वेद॥९॥

पशूनां वसयाभिषिञ्चति श्रीर्वै पशूनां वसा श्रियैवैनमेतत्पशूनाꣳ रसेनाभिषिञ्चत्यथो परमं वा एतदन्नाद्यं यद्वसा परमेणैवैनमेतदन्नाद्येनाभिषिञ्चति॥१०॥

शफग्रहा भवन्ति शफैर्वै पशवः प्रतितिष्ठन्ति प्रतिष्ठामेवैनं गमयति त्रयस्त्रिꣳशद्ग्रहा भवन्ति त्रयस्त्रिꣳशद्वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति जगतीभिर्जुहोति जागता वै पशवो जगत्यैवास्मै पशूनवरुन्धे षोडशभिर्ऋग्भिर्जुहोति षोडशकला वै पशवोऽनुकलमेवास्मिंञ्छ्रियं दधाति॥११॥

सीसेन तन्त्रं मनसा मनीषिण इति द्वौ द्वौ समासꣳ हुत्वा सते सꣳस्रवान्त्सभवनयत्य-

**7.** Then he covers it (the throne-seat) with the black antelop's skin (saying) "Let it not harm you; do not injure me"—for the black antelop's skin is the sacrifice and this is (a prayer) for non-injury to the sacrifice and to himself.

**8.** He then mounts it (the throne-seat) by chanting the *Ṛk mantra* dedicated to Varuṇa; for Varuṇa is the ruler of the Gods. Thus he consecrates him by means of its own deity. (He says while mounting) "Varuṇa, the upholder of law has taken his seat in his abode, for the regal authority, that wise one."

**9.** Then he throws a piece of gold and piece of silver (under his feet) (saying) "Protect from death; protect from lightning." The Virāḍ metre is no doubt, the rain for which there are these two deadly forms, viz. , the lightning and hail-storm. Hence the gold piece is the form of the lightning and silver one of the hail-storm. He gives protection to him from those two deities. Therefore he who performs *Sautrāmaṇī* has no danger from these two deities. So too for the one who knows thus.

**10.** He consecrates him with the marrow of the flesh of the *Paśus*; for the marrow of the flesh of animals symbolises prosperity. Thus he consecrates with the marrow of animal flesh, that is their essence. Moreoever marrow of the flesh in the highest food. So he consecrates him with the highest kind of food.

**11.** There are cups of hoofs (cups made of the hoofs of animals containing that marrow of the flesh). It is by means of the hoofs that the animals stand steady. So he makes him established (steady) thereby. There are thirty-three *Grahas* (cups); for all gods (put together) come to thirty-three and thus he consecrates him by means of all the gods. He makes the offerings (with *mantras*) in Jagatī metre; for the *Paśus* are Jagatīh (of moving nature). By means of Jagatis, he ensures cattle (wealth) for him. He offers with sixteen *Ṛk mantras*; for the *Paśus* have sixteen parts and corresponding to those parts, he bestows prosperity unto him.

**12.** (He chants the *mantras* starting with) "With leads, the wise ones who know the process" - Each time offering two (cup fulls), he empties the residue into a (common) vessel. He thereby establishes the days and nights,

होरात्राण्येवैतदर्द्धमासान्मासानृतून्त्संवत्सरे प्रतिष्ठापयति तानीमान्यहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरे प्रतिष्ठिताः॥१२॥

वैतसः सतो भवत्यप्सुयोनिर्वै वेतस आपो वै सर्वा देवताः सर्वाभिरेवैनमेतद्देवताभिरभिषिञ्चति॥१३॥

सर्वसुरभ्युन्मर्द्दनं भवति परमो वा एष गन्धो यत्सर्वसुरभ्युन्मर्द्दनं गन्धेनैवैनमेतदभिषिञ्चति॥१४॥

पुरस्तात्प्रत्यङ्ङभिषिञ्चति पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यत आ मुखादन्ववस्रावयति मुखेन ह्यन्नमद्यते सर्वतः परिक्रामꣳ सर्वाभ्य एवास्मिन्नेतद्दिग्भ्योऽन्नाद्यं दधाति तस्मात्सौत्रामण्येजानस्य सर्वासु दिक्ष्वन्नाद्यमवरुद्धं भवत्यथो य एवमेतद्वेद ॥१५॥

आश्विनेन प्रथमेन यजुषाऽभिषिञ्चत्यथ सारस्वतेनाथैन्द्रेणैताभिरेवैनमेतद्देवताभिरभिषिञ्चति तꣳ हैक एताभिश्च देवताभिरभिषिञ्चन्ति भूर्भुवः स्वरित्येताभिरु च व्याहृतिभिरेता वै व्याहृतय इदꣳ सर्वं तदेनमनेन सर्वेणाभिषिञ्चाम इति न तथा कुर्यादेताभिरेवैनं देवताभिरभिषिञ्चेदेता उ ह्येव देवता इदꣳ सर्वम्॥१६॥

पुरस्तात्स्विष्टकृतोऽभिषिञ्चति क्षत्रं वै स्विष्टकृत्क्षत्रेणैवैनमेतदभिषिञ्चत्यन्तरा वनस्पतिं च स्विष्टकृतं चाभिषिञ्चति सोमो वै वनस्पतिरग्निः स्विष्टकृदग्नीषोमाभ्यामेवैनमेतत्परिगृह्याभिषिञ्चति तस्माद्धो वैतद्विदुर्यें[३] च न त आहुः क्षत्रियो वाव क्षत्रियस्याभिषेक्तेति॥१७॥

३. चैतद्विदुर्यें MD

the half-months and months and the seasons in the year. Thus these days and nights, half-months and months and the seasons get established in the year.

**13.** The vessel ( in which the residues are poured) is made of bamboo reeds. The bamboo reeds have their origin in the waters and waters are all the gods. Thus he consecrates him by means of all the gods.

**14.** Then there is rubbing (of the sacrifice) with all fragrant substances. All fragrant substances means sweetest smell. Thus he anoints him with sweet-smelling things.

**15.** He consecrates him in the front while he faces the west; for food is taken evidently from the front. Starting from the head (he sprinkles) him for it is from the top, food is eaten. From the face, he pours (consecrating liquid), for it is through the mouth food is taken. He pours moving all around him and thereby he supplies him with food from all quarters. So for one who performs *Sautrāmaṇī*, food is assured from all directions. So too for the one who knows thus.

**16.** First he sprinkles him with a *Yajus* to the Aśvins. Then with one to Sarasvatī; then with one to Indra. Thus he consecrates him by means of these deities. Some (Adhvaryu) consecrate him with deities (in metres dedicated to Aśvins, Sarasvati and Indra) and also with the three *Vyāhṛtīs - bhūḥ, Bhuvaḥ* and *Svaḥ*. Because these *Vyāhṛtīs* represent all this (universe). (They do so) thinking "Let us consecrate him with all this." Let him not do so. He should consecrate him only (with the formulas of) these deities (Aśvins, Sarasvatī an Indra). Because these deities are no doubt, all this (universe).

**17.** Before the *Sviṣṭakṛt* offerings, he consecrates him. *Sviṣṭakrt* is the *Kṣatra*; he thus consecrates him by means of the *Kṣatra.* He consecrates him in between the (oblation to) *Vanaspati* and *Sviṣṭakṛt.* The *Vanaspati* is indeed Soma and the *Sviṣṭakṛt* is Agni. So he (encloses him by means of Agni and Soma and consecrates him. That is why those who know this as well as those who now not, say "A *Kṣatriya* is the consecrator of a *Kṣatriya.*"

अथैनं जानुमात्रे धारयन्त्यथ मुखमात्र एष्वेवास्मा एतल्लोकेष्वायतनानि कल्पयत्यभिषेको वा एष यद्वाजपेयमभिषेकः सौत्रामणी तद्यथैवादो वाजपेये यूपꣳ रोहति तदेवैतद्रूपं क्रियते॥१८॥

तदाहुः प्रेव वा एषोऽस्माल्लोकाच्च्यवते यः सौत्रामण्याभिषिच्यत इति कृष्णाजिने प्रत्यवरोहति यज्ञो वै कृष्णाजिनं यज्ञ एवान्ततः प्रतितिष्ठति॥१९॥

प्रति क्षत्रे प्रतितिष्ठामि राष्ट्र इति क्षत्र एव राष्ट्रे प्रतितिष्ठति क्षत्राद्राष्ट्रादप्रभ्रꣳशाय प्रत्यश्वेषु प्रतितिष्ठामि गोष्विति गोऽश्व एव प्रतितिष्ठति गोऽश्वादप्रभ्रꣳशाय प्रत्यङ्गेषु प्रतितिष्ठाभ्यात्मन्नित्यङ्गेष्वेवात्मन्प्रतितिष्ठत्यङ्गेभ्य आत्मनोऽप्रभ्रꣳशाय प्रति प्राणेषु प्रतितिष्ठामि पुष्ट इति प्राणेष्वेव पुष्टे प्रतितिष्ठति प्राणेभ्यः पुष्टादप्रभ्रꣳशाय प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञ इति तदनयोर्द्यावापृथिव्योः प्रतितिष्ठति ययोरिदꣳ सर्वमधि॥२०॥

अथ साम गायति क्षत्रं वै साम क्षत्रेणैवैनमेतदभिषिञ्चत्यथो साम्राज्यं वै साम साम्राज्येनैवैनꣳ साम्राज्यं गमयति सर्वेषां वा एष वेदानाꣳ रसो यत्साम सर्वेषामेवैनमेतद्वेदानाꣳ रसेनाभिषिञ्चति॥२१॥

बृहत्यां गायति बृहत्यां वा असावादित्यः श्रियां प्रतिष्ठायां प्रतिष्ठितस्तपति बृहत्यामेवैनमेतच्छ्रियां प्रतिष्ठायां प्रतिष्ठापयति॥२२॥

ऐन्द्र्यां बृहत्यां गायत्यैन्द्रो वा एष यज्ञो यत्सौत्रामणीन्द्रायतन एष एतर्हि यो यजते स्व एवैनमेतदायतनेऽभिषिञ्चति॥२३॥

**18.** They then lift him up to knee-height, then upto the navel height and then upto the face-height. Thus they provide him with abodes in these worlds. This *Abhiṣeka* (consecration) in *Sautrāmaṇī* is like the *Abhiṣeka* in *Vājapeya.* Just as at the *Vājapeya,* he (the Yajamāna) mounts the *Yūpa,* that same is done here (by raising the throne seat at three levels).

**19.** Now they raise the doubt - "Is he not moving away from this world by being consecrated in the *Sautrāmaṇī* (in this way)?" (No). He gets down upon the black antelop's skin and the black antelop's skin is indeed sacrifice. So he ultimately gets settled in the sacrifice itself.

**20.** "In every *Kṣatra* (regal authority) in the country, I got myself firmly settled" - Thus in the regal authority, in the empire, he gets settled so that he does not step away from regal authority and the empire. "I establish myself firmly in the horses and in kine" - Thus he gets established amidst horses and cows, so that he does not get divested of horses and cows. "I get myself firmly established in each of my limbs and in my body" - thus he gets established in his limbs and the body, so that his body does not lose its limbs. "I get established in each of my *Prāṇas* and in health." He thus gets established in the *Prāṇas,* in good health. So that he does not get separated from *Prāṇas* and health. "I get myself settled in the sky and the earth individually and in the sacrifice" - Thus he gets established in these sky and earth, within which all these (sacrifices) exist.

**21.** He then sings a *Sāman.* The *Sāman* is *Kṣatra* and it is thus by *Kṣatra,* he consecrates him. Moreover *Sāman* is regal authority and by means of regal authority he makes him reach the imperial power. This *Sāman,* is no doubt, the essence of all the Vedas. Thereby he consecrates him with the essence of all the Vedas.

**22.** He sings ( a *Sāman*) a Bṛhatī verse, because the yonder Sun who burns is established in the big foundation of prosperity. Thus he establishes him in the big foundation of prosperity.

**23.** He sings a Bṛhatī verse related to Indra; for, this sacrifice (*Sautrāmaṇī*) is connected with Indra and the one who performs it has Indra as his resort. Thus he consecrates him in his own resort.

अथ यस्मात्सꣳशानानि नामैतैर्वै सामभिर्देवा इन्द्रमिन्द्रियाय वीर्याय समश्यंस्तथो एवैतमृत्विजो यजमानमेतैरेव सामभिरिन्द्रियाय वीर्याय सꣳश्यन्ति सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सामानि भवन्त्येष्वेवैनमेतल्लोकेषु श्रावयन्ति चतुर्निधनं भवति चतस्रो वै दिशः सर्वास्वेवैनमेतद्दिक्षु प्रतिष्ठापयन्ति सर्वे निधनमुपावयन्ति संविदाना एवास्मिंश्छ्रियं दधाति॥ २४॥

तदाहुर्यदेतत्साम गीयतेऽथ क्वैतस्य साम्न उक्थं का प्रतिष्ठा व्यृद्धꣳ हि तद्यत्स्तुतमननुशस्तमिति॥ २५॥

त्रया देवा एकादशेत्येतद्वा एतस्य साम्न उक्थमेषा प्रतिष्ठा॥ २६॥

अथो त्रया देवा एकादशेति त्रयस्त्रिꣳशं ग्रहं जुहोति त्रया हि देवा एकादश त्रयस्त्रिꣳशाः सुशधस इति त्रयस्त्रिꣳशद्धि देवा बृहस्पति पुरोहिता इति ब्रह्म वै बृहस्पतिब्रह्मपुरोहिता इत्येवैतदाह देवस्य सवितुः सव इति देवेन सवित्रा प्रसूता इत्येवैतदाह देवा देवैरवन्तु मेति देवा ह्येतं देवैरभिषिञ्चन्ति॥ २७॥

प्रथमा द्वितीयैरिति प्रथमा ह्येतं द्वितीयैरभिषिञ्चन्ति द्वितीयास्तृतीयैरिति द्वितीया ह्येतं तृतीयैरभिषिञ्चन्ति तृतीयाः सत्येनेति तृतीया ह्येतं सत्येनाभिषिञ्चन्ति सत्यं यज्ञेनेति सत्यꣳ ह्येतं यज्ञेनाभिषिञ्चति यज्ञो यजुर्भिरिति यज्ञो ह्येतं यजुर्भिरभिषिञ्चति यजूꣳषि सामभिरिति यजूꣳषि ह्येतं सामभिरभिषिञ्चन्ति सामान्यृग्भिरिति सामानि ह्येतमृग्भिरभिषिञ्चन्त्यृचः पुरोऽनुवाक्याभिरित्यृचो ह्येतं पुरोऽनुवाक्याभिरभिषिञ्चन्ति पुरोऽनुवाक्या याज्याभिरिति पुरोऽनुवाक्या ह्येतं याज्याभिरभिषिञ्चन्ति याज्या वषट्कारैरिति याज्या ह्येतं वषट्कारैरभिषिञ्चन्ति

**24.** Now why these (*Sāmans*) are called *Saṁśānāni* (those that sharpen) is because with these *Sāmans* the gods sharpened (prepared) Indra for the vitality and power. Hence with these *Sāmans,* the *Ṛtviks* sharpen (prepare) the Yajamāna for vitality and power. These *Sāmans* are - *Saṁśravasa, Viśravasa Satyaśravasa* and *Śravasa.* They proclaim him with these titles in these worlds. These are four *Nidhanas* (*Sāma* endings) for there are four quarters. Thereby they establish him in all the four quarters. All of them (*Ṛtviks* join in chorus to sing) the *Nidhana* and thus they in one mind bestow prosperity on him.

**25.** Now they ask - "This *Sāman* is sung alright; but where is the *Uktha* of the *Sāman* and what is its basis? Because is it not useless if it is sung as *Stotra* and not accompanied by recitation (*Anuśaṁsana*)?"

**26.** (The *mantra*) "Three elevens are the Gods" - is the *Uktha* of this *Sāman* and its basis."

**27.** Otherwise he offers the thirty-third *Graha* (with the *mantra*) "Three elevens are the gods" for, there are thirty-three gods. "Three and thirty the benovalent" for the gods are indeed thirty-three. "Bṛahaspati for them the *Purohit*" - for Bṛhaspati is *Brāhman* and it means "*Brāhman* as their priest." "At the prompting of the God Savitā" - they only mean produced by the God Savitā. "Let the Gods protect me through the Gods" for the Gods indeed consecrate him through the Gods (*Brāhmins*).

**28.** "The first with the second" - for the first gods (in earth) are consecrating him with the second ones (on the aerial region)". "The second ones with the third" - for the second Gods (in the aerial region) are consecrating him through the third (in the heavens). "The third ones with the truth" - for the third gods (in the heavens) consecrate him with truth. "The truth with the sacrifice" - for the truth consecrates him with the sacrifice. "The sacrifice with the *Yajuṣ* texts" - for the truth consecrates him with the *Yajuṣ* formulas. "The *Yajuṣ* with the *Sāmans*"- for the *Yajuṣ* formulas consecrate him with the *Sāmans.* "The *Sāmans* with the *Ṛks*" - for the *Sāmans* consecrate him with the *Ṛk mantras.*" "The *Ṛks* with the *Puronuvākyas*" - for the *Ṛk* consecrate him with the invitatory chants. "The *Puronuvākyas* with the *Yajuṣ*" - for, the invitatory chants consecrate him with the offering *mantras.* The *Yājyaṣ*

वषट्कारा आहुतिभिरिति वषट्कारा ह्येतमाहुतिभिरभिषिञ्चन्त्याहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहेति तदेनमेताभिर्देवताभिः परोवरमभिषिच्याथास्मा आहुतिभिः सर्वान्कामान्त्समर्धयत्यथर्त्विक्षूपहवमिष्ट्वा[4] भक्षयत्यृतवो वा ऋत्विज ऋतुष्वेवैतदुपहवमिच्छते॥ २८॥

स भक्षयति लोमानि प्रयतिर्मम त्वङ्म आनतिरागतिः। माꣳसं म उपनतिर्वस्वस्थिमज्जा म आनतिरिति प्रेव वा एष लोकांश्च देवताश्च विशति यः सौत्रामण्याभिषिच्यते तदेतदवान्तरामात्मानमुपह्वयते[5] तथा कृत्स्न एव सर्वतनूः साङ्गः संभवति॥ २९॥ इति तृतीयं ब्राह्मणम्॥

॥ इति पञ्चमोऽध्यायः ॥

४. समर्धयन्त्वथर्त्विक्षु MD

५. See Notes

with *Vaṣaṭkāra* "– for the offering *mantras* consecrated him with utterance of Vauṣat. "The *Vaṣatkāras* with the offering" — for the *Vauṣat* utterances consecrate him with the offerings. Let the offerings fulfil my wishes – "*Bhūḥ-Svāhā*" - Thus having consecrated him by means of these deities from first to last, he thus, by means of these oblations makes all his wishes fulfiled. Having then obtained the approval of the *Ṛtviks*, he drinks (the remaining *Vasā)* (in the cup). The *Ṛtviks* are indeed the seasons and thus he seeks the approval of the seasons.

**29.** He drinks (saying) "My hairs are my efforts, my skin is my submission and approaching. The flesh is my inclination; my wealth is the bone; the marrow is my surrender" for, he who is consecrated by *Sautrāmaṇī* enters the worlds and the gods. He has now invited himself (entitled to be) among them. Thus he is born in the other world with a wholesome body and (all) limbs. (Third Brāhmaṇa Ends).

**(Chapter Five Ends.)**

# षष्ठोऽध्यायः

## प्रथमं ब्राह्मणम्

एतस्माद्वै यज्ञात्पुरुषो जायते स यद्ध वा अस्मिंल्लोके पुरुषोऽन्नमत्ति तदेनममुष्मिँल्लोके प्रत्यत्ति स वा एष परिस्रुतो यज्ञस्तायतेऽन्नाद्या वै ब्राह्मणेन परिस्रुत्स एतस्मादन्नाद्याज्जायते तꣳ हामुष्मिँल्लोकेऽन्नं न प्रत्यत्ति तस्मादेष ब्राह्मणयज्ञ एव यत्सौत्रामणी॥१॥

तस्य लोमान्येव शष्पाणि त्वक्तोक्मानि माꣳसं लाजा अस्थि कारोतरो मज्जा मासरꣳ रसः परिस्रुन्नग्रहुल्लोहितꣳ रेतः पयो मूत्रꣳ सुरोवध्यं बल्कसम्॥२॥

हृदयमेवास्यैन्द्रः पुरोळाशो यकृत्सावित्रः क्लोमा वारुणो मतस्ने एवास्याश्वत्थं च पात्रमौदुम्बरं च पित्तं नैय्यग्रोधमान्त्राणि स्थाल्यो गुदा उपशयानि श्येनपत्रे प्लीहासन्दी नाभिः कुम्भो वनिष्ठुः प्लाशिः शतातृण्णा तद्यत्सा बहुधा वितृण्णा भवति तस्मात्प्लाशिर्बहुधा विकृतो मुखꣳ सतं जिह्वा पवित्रं चप्यं पायुर्बस्तिर्वालः॥३॥

अङ्गान्येवास्याश्विनः पशुरात्मा सारस्वतो रूपमैन्द्र ऋषभस्तस्मादाहुर्गावः पुरुषस्य रूपमित्यायुर्हिरण्यं तच्छतमानं भवति तस्माच्छतायुः पुरुषः॥४॥

चक्षुषी एवास्याश्विनौ ग्रहौ पक्ष्माणि गोधूमसक्तवश्च कुवलसक्तवश्च नासिके एवास्य सारस्वतौ ग्रहावथ यानि नासिकयोर्लोमानि तान्युपवाकसक्तवश्च बदरसक्तवश्च श्रोत्रे एवास्यैन्द्रौ ग्रहावथ यानि कर्णयोर्लोमानि यानि च भ्रुवोस्तानि यवसक्तवश्चाथ यान्युपस्थे लोमानि यानि चाधस्तात्तानि

## Chapter Six

### BRĀHMAṆA I

**1.** It is certainly from this sacrifice, man is born. Whatever food a man eats in this world, that (food) in turn eats him in the world beyond. Now this sacrifice (*Sautrāmaṇī*) is performed by means of *Parisrut* (liquor). *Parisrut* is not to be eatern by a *brāhmin*. He is thus born from out of that unconsumable. Him the food does not eat in turn in the world beyond. Hence this *Sautrāmaṇī* is definitely a *brāhmin's* sacrifice.

**2.** His hairs are the young rice-shoots, his skin is green barley, his flesh is the fried rice, his bones are the vessel with a hole; his marrow is the flesh, his essence (life-sap) is the *Parisrut* (liquor); its intoxicating character is the blood; his semen is milk; his wine is fermented liquor (*Surā*) and his undisgested food in the stomach is the other impure matters.

**3.** The *Puroḍāśa* to Indra is his heart; that to Savita is his liver; that to Varuṇa is his lung; the vessel made of *Aśvattha* and *Udumbara* wood are his kidneys, the vessel made of the *Nyagrodha* wood his bile; the *Sthālī* (clay pot) is his intestines; the other extra vessels, his bowels. The two eagle feathers are his spleen; the throne-seat is his navel; the round pot (*Kumbha*), his rectum and the earthern vessel with hundred perforations is his male organ. Since that vessel happens to have many holes, his male organ is of many shapes. The bowl (*Sata* in which the remainings of the *Grahas* are poured) is his mouth; the purifying strainer (bunch of grass) is his tongue; the dish *Cāpya* his arms and the tail whisk is his bladder.

**4.** The *Paśus* dedicated to Aśvins are his limbs; the *Paśus* to Sarasvatī is his body and the bull dedicated to Indra is his form. Therefore it is said that man's form (wealth) is the kines. Gold is his life-span and it is hundred (grains) weighing and hence man is of hundred years life-span.

**5.** The *Āsvina Grahas* are his eyes; the wheat flour and the *Kuvala* flour are his eye-lashes. The two *Sārasvata Grahas* are his nostrils and the *Indra-Yava* flour and *Badara* flour are the hairs in the nostrils. The *Aindra Grahas* are his two ears and the barley flour are the hairs on his ears and brows.

वृकलोमान्यथ यान्युरसि लोमानि यानि च विकक्षयोस्तानि व्याघ्रलोमानि केशाश्च श्मश्रूणि च सिꣳहलोमानि॥५॥

त्रयः पशवो भवन्ति त्रेधाविहितो वा अयं पुरुषस्यात्मात्मानमेवास्य तैः स्पृणोति यदवाङ्नाभेस्तदाश्विनेन यदूर्ध्वं नाभेरवाचीनꣳ शीर्ष्णस्तत्सारस्वतेन शिर ऐन्द्रेण यथारूपमेव यथादेवतमात्मानं मृत्योः स्पृत्वाऽमृतं कुरुते॥६॥

त्रयः पुरोळाशा भवन्ति त्रेधा विहितं वा इदं पुरुषस्य वयो वय एवास्य तैः स्पृणोति पूर्ववयसमेवैन्द्रेण मध्यमवयसꣳ सावित्रेणोत्तमवयसं वारुणेन यथारूपमेव यथादेवतं वयो मृत्योः स्पृत्वाऽमृतं कुरुते॥७॥

षड्ग्रहा भवन्ति षड्वा इमे शीर्षन्प्राणाः प्राणानेवास्य तैः स्पृणोति चक्षुषी एवाश्विनाभ्यां नासिके सारस्वताभ्याꣳ श्रोत्रे ऐन्द्राभ्यां यथारूपमेव यथादेवतं प्राणान्मृत्योः स्पृत्वाऽमृतान्[1] कुरुते॥८॥

सन्तता याज्यापुरोऽनुवाक्या भवन्ति समानदेवत्याः प्राणानाꣳ सन्तत्या अव्यवच्छेदाय सर्वाः पुरोऽनुवाक्या भवन्ति सर्वा याज्यास्तस्मात्प्राणाः सर्वे पराञ्चः सर्वे प्रत्यञ्चः सर्वाः प्रथमा भवन्ति सर्वा मध्यमाः सर्वा उत्तमास्तस्मात्प्राणाः सर्वे प्रथमाः सर्वे मध्यमाः सर्व उत्तमाः सर्वेषां ग्रहाणां द्वे याज्यापुरोऽनुवाक्ये भवतः प्राणोदानयोस्तद्रूपं प्राणोदानावेवावरुन्धे तस्मात्सर्वे प्राणाः प्राणोदानयोरेव प्रतिष्ठिताः॥९॥

१. अमृतं TE, H

The hairs of the wolf are the hairs in his abdomen and below, the hairs of the tiger are the hairs on his chest and arm-pits. The hairs of the lion are the hairs on his head and his beard.

**6.** There are three *Paśus,* for the body of this man is of three parts; and it is the body he thereby gains (in heaven) for him. By means of the *Paśu* for Aśvins, he gains that part of the body below the navel. By means of the *Paśu* for Sarasvatī he gains that part of the body which is above the navel and below the head. By means of the *Paśu* for Indra, he gains the head. Thus in accordance with the forms and in accordance with the deities, he saves his own self from death and make them immortal.

**7.** There are three *Puroḍāśas* and this life of man is divided into three stages. By these (*Puroḍāśas*) he saves his life. The first stage (boyhead) he gains by means of the *Puroḍāśa* for Indra; the middle stage by that of Savitā and the last stage by means of that of Varuṇa. Thus in accordance with the forms and in accordance with the deities, he saves his life from death and make them immortal.

**8.** There are six *Grahas*; for there are these six *Prāṇas* (channels of vital breath) in the head, thereby he gains the *Prāṇas.* He wins his eyes by means of the two *Grahas* for Aśviṇs, his nostrils by means of the two *Grahas* for Sarasvatī and his ears by those for Indras. Thus in accordance with the forms and in accordance with the deities, he saves his *Prāṇas* (channels of vital breath) from death and make them immortal.

**9.** The *Yājya* chants (invitatory ones) and the *Puronuvākyas* (offering chants) are uttered continuously and relate to the same deities; to ensure continuity and uniterruptedness of the vital airs. They are all *Yājyas* and all are *Puronuvākyas* and hence all the vital airs move upwards and all of them move backwards. All of them become the first, the intermediate and the last (by turn). Therefore all the *Prāṇas* are first, all are intermediate and all are last. For all the *Grahas* there are two *Yājya* and *Puronuvakyas* and they are the forms of *Prāṇa* and *Udāna.* Thereby he secures the *Prāṇa* and *Udāna.* Therefore all the *Prāṇas* are established on the *Prāṇa* (in-breathing) and *Udāna* (up-breathing).

स वा एष आत्मैव यत्सौत्रामणी मन एव प्रत्यक्षाद्वाग्यजमानस्तस्यात्मैव वेदिः प्रजोत्तरवेदिः पशवो बर्हिरङ्गान्यृत्विजोऽस्थीनीध्म आज्यं मज्जा मुखमग्निरन्नमाहुतिर्वयः सꣳस्था तस्मात्सौत्रामण्ये जानो वय उपगच्छति॥१०॥

तद्यौ ह वा इमौ पुरुषाविवाक्ष्योरेतावेवाश्विनावथ यत्कृष्णं तत्सारस्वतं यच्छुल्कं तदैन्द्रं तद्यदाश्विने पशौ सत्यथैता देवताः सह यजायेतान्येवैतत्सार्धं कृत्वात्मन्धत्ते॥११॥

मन एवेन्द्रो वाक्सरस्वती श्रोत्रेऽश्विनौ यद्वै मनसा ध्यायति तद्वाचा वदति यद्वाचा वदति तत्कर्णाभ्याꣳ शृणोति तद्यत्सारस्वते पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्धं कृत्वात्मन्धत्ते॥१२॥

प्राणा एवेन्द्रो जिह्वा सरस्वती नासिकेऽश्विनौ यद्वै प्राणेनान्नमात्मन्प्रणयते तत्प्राणस्य प्राणत्वं जिह्वया वा अन्नस्य रसं विजानाति नासिके उ वै प्राणस्य पन्थास्तद्यदैन्द्रे पशौ सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्धं कृत्वात्मन्धत्ते॥१३॥

हृदयमेवेन्द्रो यकृत्सविता क्लोमा वरुणस्तद्यदैन्द्रे पुरोळाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्धं कृत्वात्मन्धत्ते॥१४॥

प्राणा एव सविता व्यानो वरुणः शिश्नमिन्द्रो यद्वै प्राणेनान्नमत्ति तद्व्यानेन व्यनिति शिश्नेन वा अन्नस्य रसꣳ रेतः सिञ्चति तद्यत्सावित्रे पुरोळाशे सत्यथैता देवताः सह यजत्येतान्येवैतत्सार्धं कृत्वात्मन्धत्ते॥१५॥

**10.** Verily the *Sautrāmaṇī* is this body. The Yajamāna is evidently the mind, the speech. His body is the *vedī*; his off-spring is the high altar and his cattle are the *Barhi* (grass spread there). His limbs are the *Ṛtviks*; his bones are the fuel, his marrow is *ghee*; his mouth is fire; his food are the offerings and his life is the concluding ritual *(Saṁsthā)*. Therefore he who performs the *Sautrāmaṇī* gains life-span.

**11.** Now these two appearing like men in the eyes are the Aśvins; the black part ( in the eyes) belongs to Sarasvatī and what is white part (in the eyes) belongs to Indra. When he offers the *Paśus* to Aśvins; he is offering to these deities in common. He thus combines those (deities or parts of eye) together and owns them unto himself.

**12.** Mind, no doubt is Indra; speech is Sarasvatī and the ears are the Aśvins; that which one thinks in his mind, he expresses by his speech and that one he hears by his ears. When he offers the *Paśu* for Sarasvatī, he is offering to these deities in commom. He thus combines these (deities of mind, speech and ear) together and owns them unto himself.

**13.** *Prāṇas*, indeed are Indra, the Sarasvatī is the tongue and the nostrils are the two Aśvins. Through the channels of breath; food is introduced (*Praṇayati*) into the body and hence it is called *Prāṇa*. By the tongue one knows the taste of the food and the nostrils are the path of the breath. So when he offers the *Paśu* to Indra, he is offering to these deities in common. He thus combines these (deities of the *Prāṇa*, tongue and nostrils) together and owns them unto himself.

**14.** His heart is Indra: his liver is Savitā and his lung is Varuṇa. When he offers, the *Puroḍāśa* of Indra, he is offering to these deities in common. He thus combines these (deities of heart, liver and lung) together and owns them unto himself.

**15.** His *Prāṇa* is Savita; his *Vyāna* is Varuṇa and his male organ is Indra. What food he eats by means of the *Prāṇa*, he digests it by means of the *Vyāna* and through his male organ he sheds the seed which is the essence of the food. When he offers the *Puroḍāśa* to Savita, he is offering to these deities in common. He thus combines these (deities of *Prāṇa*, *Vyāna* and male organ) together and owns them unto himself.

योनिरेव वरुणो रेत इन्द्रः सवितैव रेतसः प्रजनयिता तद्यद्वारुणे पुरोळाशे सत्यथैता देवताः सह यजायेतान्येवैतत्सार्धं कृत्वात्मन्धत्ते स य एवमेतद्वेदैता[6] एव देवता अनुसम्भवन्येता देवता अनुप्रजायत आ प्रजया पशुभिः प्यायते प्रत्यस्मिँल्लोके तिष्ठत्यभि स्वर्गं लोकं जयति य एवं विद्वान्त्सौत्रामण्या यजते यो वैतदेवं वेद॥१६॥ इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

अवभृथमिष्ट्वा यन्त्यवभृथं वै सोमेनेष्ट्वा यन्ति सोम एष यत्सौत्रामणी॥१॥

यद्देवा देवहेळनमिति देवकृतादेवैनमेनसो मुञ्चति यदि दिवा यदि नक्तमिति यदेवाहोरात्राभ्यामेनः करोति तस्मादेवैनं मुञ्चति यदि जाग्रद्यदि स्वप्न इति मनुष्या वै जागरितं पितरः सुप्तं मनुष्यकिल्बिषाच्चैवैनं पितृकिल्बिषाच्च मुञ्चति॥२॥

यद्ग्रामे यदरण्य इति ग्रामे वा ह्यरण्ये वैनः क्रियते तस्मादेवैनं मुञ्चति यत्सभायामिति सभ्यादेवैन-मेनसो मुञ्चति यदिन्द्रिय इति दैवादेवैनमेनसो मुञ्चति यच्छूद्रे यदर्ये यदेनश्चकृमा वयं यदेकस्याधिधर्मणि तस्यावयजनमसीति सर्वस्मादेवैनमेतस्मादेनसो मुञ्चति यदापोऽघ्न्याः इति वरुणेति शपामहे ततो वरुण नो मुञ्चेति वरुण्यादेवैनमेनसो मुञ्चति॥३॥

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुण[1] इति यो ह वा अयमपामावर्त्तः स हावभृथः स हैष वरुणस्य पुत्रो वा भ्राता वा तमेवैतत्स्तौत्यव देवैर्देवकृतमेनोऽयक्षीति देवकृतमेवैनोऽवयजतेऽव

६. एवमेतद्वै देवता TE
१. निचुम्पुणेति TE

**16.** His womb is, surely Varuṇa, his seed is Indra and the generator of the seed (potency) is Savita.When he offers the *Puroḍāśa* to Varuṇa, he offering to these deities in common. He thus combines these deities (of the womb, seed and potency) together and owns them unto himself. Whosoever knows this comes into being along with these deities and is born again along with these deities. He who knowing this performs the *Sautrāmaṇī* gets enriched with children and cattle-wealth, gets firmly established in this world and conquers the heavenly world; he also who (only) knows thus. (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

**1.** After performing the sacrifice, they proceed for the *Avabhṛta* (final ablution). They go for *Avabhṛta* after completing *Soma Yāga* and this *Sautrāmaṇī* is a *Soma* sacrifice.

**2.** (He lets float the *Māsara Kumbha* into the water with a verse starting with) "Whatever affronts to Gods, O Gods !" Thereby he delivers him (the Yajamāna) from the offence committed to the Gods. "Whether in the day or in the night - by this he exonerates of the sins committed during day and night. "While awake or while asleep" - While awake to men and while asleep to the *Pitṛs*; thus he delivers him from offence committed to humans and *Pitṛs*.

**3.** "Whatever in the village, whatever in the forests" - by this he delivers him from the sins committed in the village as well as in the forest. "Whatever in an assembly" - by this he exonerates him from offences committed in the assembly. "Whatever by sense-organs" - by this he delivers him from sins committed against the gods. "Whatever towards a Śūdra or to an Ārya, whatever against the right of any one, from those you are the expiation"- thus he exonerates him from all sins. "We swear by the unassailable waters; by Varuṇa, Save us O Varuṇa" - By this he delivers him from the offences committed to Varuṇa.

**4.** (He then immerses the *Māsara Kumbha* saying) - "O! *Nicumpana, Avabhṛta*, you are flowing a long" - By *Nicumpana*, the whirlpool (now produced by the dipping of the pot) is referred to. This is either the son or Varuṇa or his brother and he is praised by this. "Along with the gods, you

मर्त्यैर्मर्त्यकृतमिति मर्त्यकृतमेवैनोऽवयजते पुरुराव्णो देव रिषस्पाहीति सर्वाभ्यो मार्त्तिभ्यो गोपायेत्येवैतदाह॥४॥

समुद्रे ते हृदयमप्स्वन्तरित्यापो वै समुद्रो रसो वा आपस्तदेनमेतेन रसेन सꣳसृजति सन्त्वा विशन्त्वोषधीरुताप इति तदेनमेतेनोभयेन रसेन सꣳसृजति यश्चौषधिषु यश्चाप्सु द्वौ विक्रमा उदङ्ङुत्क्रामत्येतावती वै मनुष्ये जूतिर्यावान्विक्रमस्तद्यावत्येवास्मिञ्जूतिस्तयैव पाप्मानं विजहाति॥५॥

सुमित्रया न आप ओषधयः सन्त्वित्यञ्जलिनाऽप ²उपाचति वज्रो वा आपो वज्रेणैवैतं मित्रधेयं कुरुते दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत्तेनैव तं पराभावयति॥६॥

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनस इति वासोऽपप्लावयति यथेषीकां मुञ्जाद्विवृहेदेवमेनꣳ सर्वस्मात्पाप्मनो विवृहति स्नाति तम एवापहते॥७॥

उद्वयन्तमसस्परीति पाप्मा वै तमः पाप्मानमेव तमोऽपहते स्वः पश्यन्त उत्तरमित्ययं वै लोकोऽद्ब्य उत्तरोऽस्मिन्नेव लोके प्रतितिष्ठति देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति स्वर्गो वै लोकः सूर्यो ज्योतिरुत्तमꣳ स्वर्ग एव लोकेऽन्ततः प्रतितिष्ठति॥८॥

अनपेक्षमेत्याह वनीयमुपतिष्ठतेऽपो अद्यान्वचारिषमित्यपामेव रसमवरुन्धे रसेन समसृक्ष्महीत्त्यपामेव रसमात्मन्धत्ते पयस्वानग्न आगमन्तं मा सꣳसृज वर्च्चसा प्रजया च धनेन

२. See Notes

deliver me from the sins committed against the gods." By this he expiates the sins against gods. "With the help of man, from those done against men" - by this he removes the offences done to men. "From the fiercely shouting devil, O God, protect me." "Protect me from all sorts of afflictions" is what he says.

**5.** "In the ocean, deep under the waters, your heart" - The waters are ocean; and waters are essence. Now he unites him with that essence. "May the plants and waters enter you" - thereby he unites him with the essence of both, that which is in the plants and that in the waters. He takes two steps northwards (in the water) for that much is the briskness in man. As much he steps forwards that much is the briskness in him and with that he rids himself of the sin.

**6.** "May the waters and plants be friendly to us" - so saying he collects water with his two palms held close to each other. The waters are a thunderbolt and by this he enters into a concord with the thunderbolt. "Let those who hate us and whom we hate, have wicked friends" - (so saying) he throws (that water) towards that direction where his enemy is. By that (act) itself, he overcomes him (the enemy).

**7.** "As one is set free from a stake (imprisonment), as he who sheds away dirt by bathing, as the *ghee* is purified by the *Pavitra* (purifying bunch of grass), so the waters may cleanse me from sin." (Thus saying) he allows his garment to float away. Just as one would pluck out a reed from out of its sheeth, he draws him out of all sin. He then bathes and thereby drives away stuper (darkness).

**8.** (He emerges from the waters saying) "From out of darkness have we come out" - darkness is sin and it is darkness, evil that he thus descards. "Looking at the light high up" - this earth is higher than water and it is on this earth he gets established. "The divine *Sūrya*, the highest light, joined with Gods" - the highest light, Sūrya is the heaven; it is in the heaven he thus finally secures a firm foundation for himself.

**9.** He departs without looking back and approaches the *Āhavanīya* (saying) "I followed the waters today" thereby he secures the essence of the waters. "With their essence we have been united" - thus he takes into him-

चेत्याशिषमाशास्त[3] एधोऽस्येधिषीमहीति समिधमादत्त एधो ह वा अग्नेः समित्समिदसि तेजोऽसि तेजो मयि धेहीत्याहवनीये समिधमभ्यादधात्यग्निमेवैतया समिन्धे स एनꣳ समिद्धस्तेजसा समिन्धे॥९॥

आदित्यं चरुं यक्ष्यमाणो निर्वपत्यादित्यमीजान इयं वा अदितिरस्यामेव यज्ञं तनुतेऽस्यामिष्ट्वा प्रतितिष्ठति धेनुर्दक्षिणेयं वै धेनुरिमामेव सर्वान्कामान्दुहे वत्सं पूर्वस्यां ददाति मातरमुत्तरस्यां यदा वै वत्सो मातरं धयत्यथ सा प्रत्ता दुहे प्रत्तामेवैमाꣳ सर्वान्कामान्दुहे॥१०॥

तदाहुः प्रेव वा एषोऽस्माल्लोकाच्च्यते योऽपोवभृधमभ्यवैतीत्यवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतेऽयं वै लोको मित्रोऽसौ वरुणो यदेवेदमन्तरेण तत्पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजत एष्वेवैतल्लोकेषु प्रतितिष्ठति प्राणो वै मित्रोऽपानो वरुणोऽन्नमेव पयस्या तद्यन्मैत्रावरुण्या पयस्यया यजते प्राण एवान्नाद्येऽन्ततः प्रतितिष्ठति॥११॥ इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

दुष्टरीतुर्ह पौꣳसायनो दशपुरुषꣳ राज्यादपरुद्ध आस रेवोत्तरसमु ह पाटवं चाक्रꣳ स्थपतिꣳ सृञ्जया अपरुरुधुः॥१॥

स होवाच दुष्टरीतुं पौꣳसायनꣳ सौत्रामण्या त्वा याजयानि यदिदꣳ सृञ्जयेषु राष्ट्रं तत्त्वयि धास्यामीति तथेति तयैनमयाजयत्तदु ह बल्हिकः प्रातिपीयः शुश्राव कौरव्यो राजा यो ह वा अयं दुष्टरीतुः पौꣳसायनो दशपुरुषꣳ राज्यादपरुद्धोऽभूत्तमयं चाक्रः स्थपति सौत्रामण्या याजयिष्यति यदिदꣳ सृञ्जयेषु राष्ट्रं तद्धास्मिन्धास्यतीति॥२॥

३. आशिषमेवैतदाशास्ते MD

self the essence of the waters. "O Agni ! the juicy ! I have come; you please unite me with splendour, offspring and with wealth." This is by way of invoking a blessing. "You are a kindler (one who encourages); let us prosper" - so saying he takes a *Samidhā*. He then places that *Samidhā* in the *Āhavanīya* (saying) "You are the enkindler of Agni and (hence) you are the kindler, the splendour - bestow splendour on me." Thereby he enkindles the fire and thus enkindled, Agni bestows splendour into him.

**10.** He prepares a *caru* for Aditi which he is about to proficiate Aditi. Aditi bring this earth, to who offers to Aditi purpose the sacrifice on this (earth) and by so offering, gets firmly established on this earth - The *Daksiṇā* for this is a milch cow with calf. The milch cow is this earth and thus the milch out from her (the earth) all his wishes.

**11.** In this connection they say - "Surely he who enters into the *Avabhṛta* waters falls away from this world." (That is not so). He after emerging from the bath, offers a cup of curd to Mitrā-Varuṇa; Mitra is the terrestrial world and Varuṇa is that above and the cup of curd is what is here between those two worlds. Thus by offering that curd to Mitrā-Varuṇa, he establishes himself in these (three) worlds. Mitra is the *Prāṇa* and Varuṇa is *Apāna* and the curd is indeed, food. In as much as he sacrifices with curd to Mitra and Varuṇa, he ultimately gets established in the *Prāṇa* and food. (Second Brāhmaṇa Ends.)

**BRĀHMAṆA III**

**1.** Now, Duṣṭarītu - Pauṁsāyana stood expelled from the kingdom for the last ten generations and the *Sṛñjayas* kept out Revottara Cākra-Sthapati (from the country). (The former is a *Kṣatriya* and the latter a *Brāhmin*).

**2.** He (Revottara). told Duṣṭarītu Pauṁsāyana - "I shall enable you to perform the *Sautrāmaṇī* and see that this kingdom which is in the hands of *Sṛñjayas,* I shall get for you." He (Duṣṭarītu) said "Yes" and he made him perform that. That (news) Balhika – Prātipīya, the king of the *Kurus,* heard. "This Duṣṭarītu Pauṁsāyana was banished from kingdom since the last ten generations and him, this Cākra Sthapati is going to cause to perform *Sautrāmaṇī* and this kingdom which is with the *Sṛñjayas,* he is going to vest in him."

स होवाच तन्वा अहं तं वेदिष्यामि यदि स तस्मिन्नाष्ट्रं धास्यति बहिर्धा वैनः राष्ट्राद्धास्यतीति स आजगाम यस्यां वेलायां ग्रहा गृह्यन्ते॥३॥

स होवाच स्थपते चाक्र नाहवनीये सुरा होतव्येत्याहुर्नान्यत्राहवनीयाद्यद्याहवनीये सुराः होष्यसि पापवस्यसंकरिष्यसि जामि यज्ञस्य यद्यन्यत्राहवनीयाद्बहिर्द्धैनः राष्ट्राद्धास्यसि नैनः राष्ट्रे धास्यसि नास्मिन्नाष्ट्रं धास्यसीति॥४॥

स होवाच नाहवनीये सुराः होष्यामि नान्यत्राहवनीयान्न पापवस्यसं करिष्यामि न जामि यज्ञस्य नैनं बहिर्धा राष्ट्राद्धास्यामि राष्ट्र एनं धास्यामि राष्ट्रमस्मिन्धास्यामीति॥५॥

स होवाच कथः हि करिष्यसी३ इति स हैतदुवाचासुरेषु वा एषोऽग्रे यज्ञ आसीत्सौत्रामणी स देवानुपप्रैत्सोऽप आगच्छत्तमापः प्रत्यनन्दंस्तस्मादु श्रेयाः समागतं प्रत्येव नन्दन्ति तः होचुरेह्येवभगव इति॥६॥

स होवाच बिभेमि वै प्रणय तमेति कस्माद्भगवो बिभेषीत्यसुरेभ्य इति तथेति तमापः प्राणयंस्तस्माद्यो वधत्रो भवति स बिभ्यतं प्रणयति यदापः प्राणयंस्तस्मादापः प्रणीतास्तत्प्रणीतानां प्रणीतात्वं प्रति ह तिष्ठति य एवमेतत्प्रणीतानां प्रणीतात्वं वेद॥७॥

तदिष्टाः प्रयाजा आसुरपर्यग्निकृतमथासुरा अन्वाजग्मुस्ते देवाः पर्यग्निनैवासुरान्त्सपन्नान्भ्रातृव्यान्यज्ञादन्तरायंस्तथो एवैष एतत्पर्यग्निनैव द्विषन्तं भ्रातृव्यं यज्ञादन्तरेति॥८॥

**3.** He decided "I will inform him (Cākra) that if he confers the kingship on him, he will indeed be thrown out of (my) country." He came (to the place of the sacrifice) at that time when the *Grahas* (*Surā* cups) were being collected.

**4.** He said - "O Sthapati ! *Surā* (liquor) should not be offered in the *Āhavanīya* fire, they say and (they also say) not any where else than in the *Āhavanīya*. If you offer *Surā* in the *Āhavanīya*, you will be causing disorder and a repetition in the sacrifice. If you offer anywhere else than in the *Āhavanīya*, you will exclude him (Duṣṭarītu) from the kingdom and will not keep him in the country; nor you will confer kingship upon him."

**5.** He (Cākra) said, "I will not offer *Surā* in the *Āhavanīya*, nor elsewhere (than the *Āhavanīya)*, nor I will cause disorder or repetition in the sacrifice." Nor will I keep him out of the kingdom. I will keep him in the kingdom and confer kingship unto him.

**6.** He (Balhika) asked - "How will you do it?" He replied thus - "formerly that sacrifice of *Sautrāmaṇī* was in (the possession of) *Asuras*. He (*Sautrāmaṇī*) moved towards the gods and (in the process) entered the waters. The waters merrily welcomed him, as people welcome an honoured guest. They told him merrily, "Sir, please come."

**7.** He said, "Sirs, I am afraid, please escort me." They (waters) asked - "Sir, from whom you are afraid?" He said, "I am afraid of the *Asuras*." Agreeing (to his request) the waters lead him. That is why the one who saves a victim, escorts him, the scared. Since the waters escorted (*Prāṇayan*) (those) waters are *Praṇītas*. That is the aspect of *Praṇīta* of the *Praṇīta* waters. He who thus knows the *Praṇīta* aspect of the *Praṇīta* waters, gets well-established.

**8.** Now the *Prayājas* (fore-offerings) had been offered upto the point of *Paryagnikaraṇa* (taking the fire round the oblations, a rite to be performed before offering of oblations). They prevented the inimical *Asuras* from (entering) the sacrifice, by means of that *Paryagni* (fire taken round). In like manner, this one (Yajamāna) by means of the *Paryagni*, keeps out, his hateful enemy from the sacrifice.

देवयोनिर्वा एष यदाहवनीयस्तस्यैतावमृतपक्षौ यावेतावभितोऽग्नी तद्यदाहवनीये यज्ञं तन्वते देवयोनावेवैतद्देवेभ्यो यज्ञं तन्वत उप हैनं पुनर्यज्ञो नमति नास्माद्यज्ञो व्यवच्छिद्यते य एवमेतद्वेद यस्य वैवं विदुष एतत्कर्म क्रियते॥९॥

उत्तरेऽग्नौ पयोग्रहाञ्जुह्वत्युत्तरेऽग्नौ पशूञ्छ्रपयन्ति पशूनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्रजनयत्यप ह वै पशूनां पुनर्मृत्युं जयति नास्माद्यज्ञो व्यवच्छिद्यते य एवमेतद्वेद यस्य वैवं विदुष एतत्कर्म क्रियते॥१०॥

दक्षिणेऽग्नौ सुराग्रहाञ्जुह्वति दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंयुक्ताभिः पितॄनेव तन्मर्त्यान्त्सतोऽमृतयोनौ दधाति मर्त्यान्त्सतोऽमृतयोनेः प्रजनयत्यप ह वै पितॄणां पुनर्मृत्युं जयति नास्माद्यज्ञो व्यवच्छिद्यते य एवमेतद्वेद यस्य वैवं विदुष एतत्कर्म क्रियते॥११॥

तद्यदेतावग्नी आहवनीयाद्विह्रियेते तेनाहवनीयावथ यदाहवनीयं पुनर्नाश्नुवाते तेनानावहवनीयौ तेनोभौ होमा उपाप्नोति यश्चाहवनीये यश्चानाहवनीये यच्च हुतं यच्चाहुतं पुनर्हायमित्त्वोवाच न तदस्ति यत्सृञ्जयानाꣳ राष्ट्रं दुष्टरीतोस्तदद्य तथायं चाक्रः स्थपतिर्यज्ञेऽकरिति॥१२॥

उत्तरेऽग्नौ पशुभिः पुरोळाशैः पयोग्रहैरिति चरन्ति यदु चान्यत्तेन देवानेव तद्देवलोके प्रीणाति त एनं प्रीताः प्रीणन्त्यथो देवलोकमेव जयति॥१३॥

**9.** That *Āhavanīya* is indeed the womb of the gods and those two fires on either side of it are its immortal wings. When they perform the sacrifice in the *Āhavanīya*, they perform it in the womb of the gods for the gods. The sacrifice becomes amenable to him and the sacrifice does not get separated from him who knows thus and same is the case of him, a knower of this, for whom the sacrifice is conducted.

**10.** On the northern fire, the milk cups (*Payo Grahas*) are offered. The *Paśus* are cooked in the northern fire. Thereby he places the *Paśus*, mortal though they are, in the immortal womb. He makes them to be born out of the immortal womb. He then conquers the death of the *Paśus*. The sacrifice does not get separated from him, who knows thus and same is the case of him, a knower of this, for whom the sacrifice is conducted.

**11.** They offer the *Surā Grahas* (cups of liquor) on the southern fire. Near the southern fire, they purify the *Surā* with threefold *Pavitras* (each *Pavitra* made of three strains of grass). Thus he places the *Pitṛs* who are (actually) mortals, in the womb of immortality and causes them who are mortals to be born out of the immortal womb. He conquers the recurring death of *Pitṛs* and the sacrifice is not separated from him, who knows this thus. Same is the case of him, a knower of this for whom the sacrificial rite is performed.

**12.** Since these two fires (the northern and the southern) are taken out of the *Āhavanīya*, they are *Āhavanīyas*. Since they do not unite with the *Āhavanīya*, subsequently, they are non-*Āhavanīyas*. Thereby he gains (the advantage of) both kinds of oblations viz., that offered in the *Āhavanīya* and that offered in the non-*Āhavanīya*; that which is offered and that which is not offered. Later he (Balhika) went home and said "It was not as I thought. The kingdom of *Sṛñjayas* has gone to Duṣṭarītu because Cākra Sthapati did such and such (offering in the northern and southern fires) in the sacrifice."

**13.** They proceed with the *Paśus, Puroḍāśas* and cups of milk, in that order, and the other things as well in the northern fire. Thereby he pleases only the gods in the world of the gods. They (gods) thus pleased reward him and by that he conquers the world of gods.

दक्षिणेऽग्नौ सुराग्रहाञ्जुह्वति दक्षिणेऽग्नौ पावयन्ति पवित्राभिस्त्रिषंयुक्ताभिः पितॄनेव तत्पितृलोके प्रीणाति त एनं प्रीताः प्रीणन्त्यथो पितृलोकमेव जयति॥१४॥

स वा एष आत्मैव यत्सौत्रामणी तस्मात्सा निरुक्ता निरुक्तो ह्यात्मा लोको वयोधास्तस्मात्सोऽनिरुक्तो हि लोक आत्मा वै यज्ञस्य[1] यत्सौत्रामणी बाहू ऐन्द्रश्च वयोधाश्च तद्यदेतावभितः पशू भवतस्तस्मादिभावात्मानमभितो बाहू यथो वै पशुरेवं यूपस्तद्यदेतः सौत्रामणिकं यूपमेतौ यूपावभितो भवतस्तस्माद्विमावात्मानमभितो बाहू॥१५॥इति तृतीयं ब्राह्मणम्॥

॥ इति षष्ठोऽध्यायः ॥

१. यज्ञस्य सौत्रामणी MD

**14.** They offer the *Surā Grahas* (cups of liquor) in the southern fire. (Near that) southern fire they purify them (*Surā Grahas*) with threefold *Pavitras*. Thereby he pleases only the *Pitṛs* in the world of the *Pitṛs* and so he conquers the world of *Pitṛs* itself.

**15.** This *Sautrāmaṇī* is indeed the body and hence it is defined; for the body is defined. This world is *Indra-Vayodhā* (who confers strength) and hence he is undefined; for the world is undefined. This *Sautrāmaṇī* is the body of the sacrifice. Its two arms are the *Paśu* of Indra and the *Paśu* of *Vayodhā*. Since these two *Paśus* happen to be on either sides, they are the two arms on either side of the body. As the *Paśu* so the *Yūpa* and hence for the *Sautrāmaṇī*, on both sides there are two extra *Yūpas*. That is how there are arms on both sides of the body. (Third Brāhmaṇa Ends.)

**(Chapter Six Ends.)**

# सप्तमोऽध्यायः

## प्रथमं ब्राह्मणम्

दीर्घसत्रꣳ ह वा एत उपयन्ति येऽग्निहोत्रं जुह्वत्येतद्वै जरामर्यꣳ सत्रं यदग्निहोत्रं जरया वा ह्येवास्मान्मुच्यन्ते मृत्युना वा॥१॥

तदाहुर्यदेतस्य दीर्घसत्रिणोऽग्निहोत्रं जुह्वतोऽन्तरेणाग्नी युक्तं वा वियायात्सं[1] वा चरेयुः किं तत्र कर्म का प्रायश्चित्तिरिति कुर्वीत हैव निष्कृतिमपीष्ट्या यजेत तदु तन्नाद्रियेतेमान्वा एष लोकाननु वितनुते योऽग्नी आधत्ते॥२॥

तस्यायमेव लोको गार्हपत्योऽन्तरिक्षलोकोऽन्वाहार्यपचनोऽसौ लोक आहवनीयः कामन्वा[2] एष लोकेषु वयाꣳसि युक्तं चायुक्तं च सञ्चरन्ति स यदि हास्याप्यन्तरेण ग्रामोऽग्नीन्वियायान्नैव मे काचनार्त्तिरस्ति न रिष्टिरिति हैव विद्यात्॥३॥

त्रयो ह त्वाव पशवोऽमेध्याः दुर्वराह ऐडकः श्वा तेषां यद्यधिश्रितेऽग्निहोत्रेऽन्तरेण कश्चित्सञ्चरेत्किं तत्र कर्म का प्रायश्चित्तिरिति तद्धैके गार्हपत्याद्भस्मोपहत्याहवनीयान्निवपन्तो यन्तीदं विष्णुर्विचक्रम इत्येतयर्चा यज्ञो वै विष्णुस्तद्यज्ञेनैव यज्ञमनुसन्तन्मो भस्मानाऽस्य पदमपि वपाम इति वदन्तस्तदु तथा न कुर्याद्यो हैनं तत्र ब्रूयादासान्वा[3] अयं यजमानस्यावाप्सीत्क्षिप्रे

१. विवायात् MD
२. कामंन्वा TE
३. आसांन्वा MD, See Notes

# तृतीयोऽध्यायः

## प्रथमं ब्राह्मणम्

प्रजापतेरक्ष्यश्वयत्तत्परापतत्ततोऽश्वः समभवद्यदश्वयत्तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष ह वै प्रजापतिः सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजः सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरंस्तरति सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते॥१॥

उत्तरं वै तत्प्रजापते श्वयत्तस्मादुत्तरतोश्वस्यावदद्यन्ति दक्षिणतोऽन्येषां पशूनां वैतसः कटो भवति। अप्सुयोनिर्वा अश्वोऽप्सुजा वेतसः स्वयैवैनं योन्या समर्थयति चतुष्टोमस्तोमो भवति सरड्वा अश्वस्य सक्थ्या 'बृहत्तद्देवाश्चतुष्टोमेनैव स्तोमेन प्रत्यदधुर्यच्चतुष्टोमः स्तोमो भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र. उत्तम महर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुध्यै॥२॥ इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

परमेण वा एष स्तोमेन जित्वा चतुष्टोमेन कृतेनायानामुत्तरेऽहन्नेकविंशे प्रतिष्ठायां प्रतितिष्ठत्येकविंशात्प्रतिष्ठाया उत्तरमहर्ऋतूनन्वारोहत्यृतवो वै पृष्ठान्यृतवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठति॥१॥

१. -वृहत्

## Chapter Three

### BRĀHMAṆA I

**1.** The eyes of Prajāpati swelled; that which fell out from that, came *Aśva* (horse). Since it swelled (*Aśvayat*) that confers *Aśvahood* to the horse. The gods restored it by means of *Aśvamedha* and he who performs *Aśvamedha*, makes Prajāpati complete and himself becomes complete. This is an expiation for everything; it is an antidote for everything. It is by means of this that the gods got over all evil. Even the sin of *Brahmahatyā* (killing of a Brāhmin), they got over by this. So he who performs *Aśvamedha* gets rid of all sins and gets rid of even the sin of killing a Brāhmin.

**2.** It was the left eye of Prajāpati which swelled; so they cut out (the flesh of) the left part of the horse. In the case of the other *Paśus*, the right side (flesh is cut). There is a bamboo-mat (used for cutting); for the horse was produced from the womb of the waters and bamboo also comes from waters. So he brings it into contact with its own womb. The form of chanting is *Catuṣṭoma* (three *Stotras* chanted in four *Paryāyas* and called *Catuṣṭoma*), for the first day. A bee pierced the horse's thigh and by means of *Catuṣṭoma* method of chanting, the gods restored it. Thus the *Catuṣṭoma* method of chanting is for the completeness of the horse. The last day constitutes of an *Atirātra* with all the *Stomas*. For, the *Atirātra* with all the *Stomas* is everything and *Aśvamedha* is everything. So, for the sake of obtaining everything and for the owning of everything (it is an *Atirātra* with all the *Stomas*). (First Brāhmaṇa Ends.)

### BRĀHMAṆA II

**1.** Having conquered with this supreme *Stoma* the *Catuṣṭoma* the *Kṛta* among the dice, this one (Yajamāna), establishes himself in the next day on the *Ekaviṁśa* (the Sun), a firm foundation. From the *Ekaviṁśa*, the firm foundation, on the next day, he ascends to the seasons; for the *Pṛṣṭha-Stotras* (of the next day) are the seasons and seasons mean year and thus he gets established in the seasons, the year.

शक्वर्यः पृष्ठं भवन्त्यन्यदन्यच्छन्दोऽन्येऽन्ये वा.अत्र पशव आलभ्यन्त उतेवग्राम्या उतेवारण्या यच्छक्वर्य्यः पृष्ठं भवन्त्यश्वस्यैव सर्वत्वायान्ये पशव आलभ्यन्तेऽन्येऽन्ये हि स्तोमाः क्रियन्ते॥२॥

तदाहुर्नैते सर्वे पशवो यदजावयश्चारण्याश्चैते वै सर्वे पशवो यद्गव्या इति [1]गव्या उत्तमे[1]ऽहन्नालभत एते वै सर्वे पशवो यद्गव्याः सर्वानेव पशूनालभते वैश्वदेवा भवन्ति वैश्वदेवो वा अश्वोऽश्वस्यैव सर्वत्वाय बहुरूपा भवन्ति तस्माद्बहुरूपाः पशवो नानारूपा भवन्ति तस्मान्नानारूपाः पशवः॥३॥
इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

यत्तिस्रोऽनुष्टुभो भवन्ति तस्मादश्वस्त्रिभिस्तिष्ठमꣳस्तिष्ठति यच्चतस्रो गायत्र्यस्तस्मादश्वः सर्वैः पद्भिः प्रतिदधत्पलायते परमं वा एतच्छन्दो यदनुष्टुप्परमोऽश्वः पशूनां परमश्चतुष्टोमः स्तोमानां परमेणैवैनं परमतां गमयति॥१॥

शक्वर्यः पृष्ठं भवन्त्यन्यदन्यच्छन्दोऽन्येऽन्ये हि स्तोमाः क्रियन्ते यच्छक्वर्यः पृष्ठं भवन्त्यश्वस्यैव सर्वत्वाय॥२॥

एकविꣳशं मध्यममहर्भवत्यसौ वा आदित्य एकविꣳशः सोऽश्वमेधः स्वेनैवैनꣳ स्तोमेन स्वायां देवतायां प्रतिष्ठापयति॥३॥

वामदेव्यं मैत्रावरुणसाम भवति प्रजापतिर्वै वामदेव्यं प्राजापत्योऽश्वः [2]स्वैयैवै (नं) देवतया समर्द्धयति॥४॥

१-१. गव्यानुत्तमे
२. स्वयैवैनं

**2.** The verses in *Śakvarī* form the *Pṛṣṭha-Stotras* (of the second day). There is a different metre for each *Stotra*; because different are the *Paśus*, both tame and wild ones are immolated here on each. The *Pṛṣṭha* in *Śakvarī* metre are there for the completness of the horse. Different *Paśus* are immolated on different days, because *Stomas* also differ in different days.

**3.** They say on this - "goats, sheep and the wild beasts - all these are not *Paśus*." Only the cow and others are known as *Paśus*. On the last day, he immolates the cow and others, because they are all *Paśus*; the cows etc. In this way he immolates all the *Paśus*. This is for Viśvedevas; for the sake of completeness of the horse (sacrifice). They are of many forms. That is why *Paśus* are of many forms. They are of different forms; hence the *Paśus* are of different forms. (Second Brāhmaṇa Ends.)

## BRĀHMAṆA III

**1.** Since there are three chants in Anuṣṭhubh metre (for the *Bahiṣpavamāna Stotra* of the *Catuṣṭoma* on the last day), the horse, while standing, stands on three legs. Since they are made into four chants in Gāyatrī metre, the horse when on the move, runs on all the four legs. That Anuṣṭhubh is the super-most among the metres and the horse is the super-most among the *Paśus*. The *Catuṣṭoma* is the super-most among the *Stomas*. So, by means of the super-most, he causes it to become super-most.

**2.** The chants in *Śakvarī* metre form the *Pṛṣṭha* (of the second day). They are in different metres, for different *Stomas* are performed on each day, the *Śakvarī* chants form the *Pṛṣṭha* for the completeness of the horse (sacrifice).

**3.** The middle day is an *Ekaviṁśa* one; for the *Ekaviṁśa* is yonder sun and so is *Aśvamedha*. Thus by means of its own *Stoma*, he makes it established in its own deity.

**4.** The *Sāman* sung for the Maitrāvaruṇa is the *Vāmadevya Sāman*. The *Vāmadevya* is indeed Prajāpati and the *Aśvamedha* belongs to Prajāpati. Thus he enriches it with its own deity.

पार्थुरश्मं ब्रह्मसाम भवति रश्मिना वा अश्वो यत ईश्वरो वा अश्वोऽयतोऽ धृतोऽप्रतिष्ठितः परां परावतं गन्तोर्यत्पार्थुरश्मं ब्रह्मसाम भवत्यश्वस्यैव धृत्यै॥५॥

सङ्कृत्यच्छावाकसाम भवत्युत्सन्नयज्ञ इव वा एष यदश्वमेधः किं वा ह्येतस्य क्रियते किं वा न यत्सङ्कृत्यच्छावाकसाम भवत्यश्वस्यैव सर्वत्वाय सर्वस्तोमोऽतिरात्र उतममहर्भवति सर्वं वै सर्वस्तोमोऽतिरात्रः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै॥६॥ इति तृतीयं ब्राह्मणम्॥

## चतुर्थं ब्राह्मणम्

एकविꣳशोऽग्निः भवत्येकविꣳश(ः) स्तोम एकविꣳशतिर्यूपा यथा वा ऋषभा वा वृषाणो वा सꣳस्फुरेरन्नेवमेते स्तोमाः (समाः) समृच्छन्ते यदेकविꣳशास्तान्यत्समर्पयेदार्तिमार्च्छेद्यजमानो हन्येतास्य यज्ञो द्वादश एवाग्निः स्यादेकादश यूपा यद्वादशोऽग्निर्भवति द्वादश मासाः संवत्सरः संवत्सरमेव यज्ञमाप्नोति यदेकादश यूपा विराड्वा एषा सम्मीयते यदेकादशनी तस्यै य एकादश(ः) स्तन एवास्यै स दुह एवैनां तेन॥१॥

तदाहुर्यद्द्वादशोऽग्निः स्यादेकादश यूपा यथा स्थूरिणा यायात्तादृक्तदित्येकविꣳश एवाग्निर्भवत्येकविꣳश(ः) स्तोम एकविꣳशतिर्यूपास्तद्यथा पृष्टिभिर्या यात्तादृक्तत्॥२॥

शिरो वा एतद्यज्ञस्य यदेकविꣳशो यो वा अश्वमेधे त्रीणि शीर्षाणि वेद शिरो ह राज्ञां भवत्येकविꣳशोऽग्निर्भवत्येकविꣳशः स्तोम एकविꣳशतिर्यूपा एतानि वा अश्वमेधे त्रीणि शीर्षाणि

**5.** *Brahma Sāman* is the *Pārthuraśma Sāman* (out of the two varieties of the *Pārthuraśma* which is to be sung on this occasion by the *Brāhmaṇācchaṁsin*). Because the horse is controlled by *Raśmi* (reins). If the horse is uncontrolled, unrestricted and unsteadied, it is likely to go far away. So adoption of *Brahmasāman* as *Pārthuraśma* is to steady the horse.

**6.** *Saṁkṛti Sāman* is the *Sāman* of the *Acchāvāka*. For, the *Aśvamedha* is an unfinished sacrifice (some part of it is always likely to be missed in the performance). Some parts of it are done and some are not done. Making the *Saṅkṛti Sāman* as the *Sāman* of the *Acchāvāka*, he ensures completeness of the horse sacrifice. The *Atirātra* with all the *Stomas* (*Sarvastoma*) happens to be the last day. The *Sarvastoma Atirātra* means all and *Aśvamedha* is all. So (the *Atirātra* is *Sarvastoma* on the last day) for obtaining everything, for owning everything. (Third Brāhmaṇa Ends.)

## BRĀHMAṆA IV

**1.** The fire-altar is twenty-one-fold (measuring twenty-one man's length in each of the four sides). There are twenty-one *Stomas* and *Yūpas* are also twenty-one. Even like the bulls and the male horses in combat, these twenty-one *Stomas* run counter to one another. If he were to bring them together, the Yajamāna will have trouble and his sacrifice would be destroyed. There may be a twelve-fold altar (measuring twelve mens' length) and eleven *Yūpas*. Why the altar can be twelve-fold is because the year has twelve months and thereby he gains the year, the sacrifice. Why the *Yūpas* can be eleven is because it corresponds to the Virāḍ metre and the Virāḍ is eleven-syllablled. The eleventh syllable is its teat, by which he milks it.

**2.** Now they ask- "If Agni is twelve-fold and the *Yūpas* are eleven, it would be like cart driven with one bullock yoked." There are twenty-one-fold altar, twenty-one-fold *Stoma* and twenty-one *Yūpas*. That is like a cart driven with side-horses.

**3.** This twenty-one-fold is the head of the sacrifice. He who knows the three heads in the *Aśvamedha*, becomes the head among the kings. Twenty-one-fold altar, twenty-one-fold *Stomas* and twenty-one *Yūpas* and these are the three heads of *Aśvamedha*. He who knows them thus, becomes the head of the kings. He who knows the three *Kakuds* (humps) in the *Aśvamedha*, becomes the high-

तानि य एवं वेद शिरो ह राज्ञां भवति यो वा अश्वमेधे तिस्रः ककुदो वेद ककुद्ध राज्ञां भवत्येकविंशोऽग्निर्भवत्येकविंशः स्तोम एकविंशतिर्यूपा एवा अश्वमेधे तिस्रः ककुदस्ता य एवं वेद ककुद्ध राज्ञां भवति॥ ३॥ इति चतुर्थं ब्राह्मणम्॥

## पञ्चमं ब्राह्मणम्

सर्वाभ्यो वै देवताभ्योऽश्व आलभ्यते यत्प्राजापत्यं कुर्याद्या देवता अपिभागास्ता भागधेयेन व्यर्द्धयेच्छादं दद्भिरवकां दन्तमूलैरित्याज्यमवदाना (नि) कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति या एव देवता अपि भागास्ता भागधेयेन समर्धयत्यरण्येऽनूच्यान्हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोति द्यावापृथिव्योर्वै सर्वा देवताः प्रतिष्ठितास्ता एवैतत्प्रीणाति देवासुराः संयत्ता आसन्॥ १॥

तेऽब्रुवन्नग्नयः स्विष्टकृतोऽश्वस्य वयमुद्धारमुद्धरामहै तेनासुरानभिभविष्याम इति ते लोहितमुदहरन्त भ्रातृव्याभिभूत्यै यत्स्विष्टकृद्भ्यो लोहितं जुहोति भ्रातृव्याभिभूत्यै भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद॥ २॥

गोमृगकण्ठेन प्रथमामाहुतिं जुहोति पशवो वै गोमृगा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति[1] तस्माद्यत्रैषाश्वमेध आहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते॥ ३॥

अश्वशफेन द्वितीयामाहुतिं जुहोति पशवो वा एकशफा रुद्रः स्विष्टकृत्पशूनेव रुद्रादन्तर्दधाति[2] तस्माद्यत्रैषाश्वमेध आहुतिर्हूयते न तत्र रुद्रः पशूनभिमन्यते॥ ४॥

अयस्मयेन चरुणा तृतीयामाहुतिं जुहोत्यायस्यो[3] वै प्रजा रुद्रः स्विष्टकृत्प्रजा एव रुद्रादन्तर्दधाति[4] तस्माद्यत्रैषाश्वमेध आहुतिर्हूयते न तत्र रुद्रः प्रजा अभिमन्यते॥ ५॥ इति पञ्चमं ब्राह्मणम्॥

१. अन्तर्द्दधाति

२. अन्तर्द्दधाति

३. आयास्यो

४. अन्तर्द्दधाति

est among the kings. Twenty-one-fold altar, twenty-one-fold *Stomas* and twenty-one *Yūpas* - the three *Kakuds* are in *Aśvamedha.* He who knows them becomes the supreme among the kings. (Fourth Brāhmaṇa Ends.)

**BRĀHMAṆA V**

**1.** The horse is immolated for all the deities. Were he to make it one belonging to Prajāpati (only), he will by denying those deities who are entitled, of their shares. He offers oblations to the deities mentioning them one by one by name, with portions of *ghee,* saying- "with the teeth, the grass; with the roots of the hair, the lotus." Thereby he bestows their respective shares to the entitled deities. After making the *Araṇye-Anūcya* offerings (*mantras* to be recited in the forest meant for the Maruts), he offers the last offering to the heaven and earth. Because, all the gods are established in the heaven and the earth. Then he pleases them by this. Now the gods and *Asuras* were locked in combat.

**2.** They (the gods) said- "We are the fires, *Sviṣṭakṛts* (who make the offerings well-offered) of the *Aśvamedha* and we shall take out a special share for ourselves and with that we shall defeat the *Asuras.* They took out blood for themselves to defeat their enemies. So, blood is offered for *Sviṣṭakṛts,* to overcome the enemy. The hateful enemy of one who knows thus, is undone by himself.

**3.** The first oblation he offers, the neck of the *Gavaya* (a particular variety of ox). The *Gavayas* are indeed *Paśus* and Rudra is the *Sviṣṭakṛt* (one who makes the offering well-offered). He thus hides the cattle from Rudra. That is why Rudra does not capture the cattle in the area where this offering of the *Aśvamedha* is made.

**4.** The second oblation he makes with the horse's hoof. The single-hoofed animals are indeed cattle. Rudra is the *Sviṣṭakṛt.* He thus hides the cattle from Rudra. Hence where this offering of *Aśvamedha* is made, their Rudra does not capture the cattle.

**5.** The third oblation is made with an iron bowl. The people are of iron and the *Sviṣṭakṛt* is Rudra. Thus he hides the people from Rudra. Hence, when this *Aśvamedha* offering is made, Rudra does not capture the people. (Fifth Brāhmaṇa Ends.)

## षष्ठं ब्राह्मणम्

सर्वेषु वै लोकेषु मृत्यवोऽन्वायत्तास्तेभ्यो यदाहुतीर्न जुहुयाल्लोके लोक एनं मृत्युर्विन्देद्यन्मृत्युभ्य आहुतीर्जुहोति लोके लोक एव मृत्युमप जयति॥ १॥

तदाहुर्यदमुष्मै स्वाहामुष्मै स्वाहेति जुह्वत्सञ्चक्षीत बहुं मृत्युममित्रं कुर्वीत मृत्यव आत्मानमपिदध्यादिति मृत्यवे स्वाहेत्येकस्मा एवैकामाहुतिं जुहोत्येको ह त्वा अमुष्मिंल्लोके मृत्युरशनायैव तमेवामुष्मिंल्लोकेऽप जयति॥ २॥

ब्रह्महत्यायै स्वाहेति द्वितीयामाहुतिं जुहोत्यमृत्युर्ह वा अन्यो ब्रह्महत्यायै मृत्युरेष ह वै साक्षान्मृत्युर्यद्ब्रह्महत्या साक्षादेव मृत्युमपजयत्येताः ह वै मुण्डिभ औदन्यो ब्रह्महत्यायै प्रायश्चित्तिं विदाञ्चकार यद्ब्रह्महत्याया आहुतिं जुहोति मृत्युमेवाहुत्या तर्पयित्वा परिपाणं कृत्वा ब्रह्मघ्ने भेषजं करोति तस्माद्यस्यैषाश्वमेध आहुतिर्हूयेतऽपि योऽस्यापरीषु प्रजायां ब्राह्मणः हन्ति तस्मै भेषजं करोति॥ ३॥ इति षष्ठं ब्राह्मणम्॥

## सप्तमं ब्राह्मणम्

अश्वस्य वा आलब्धस्य मेध उदक्रामत्तदश्व स्तोमीयम भवद्यदश्वस्तोमीयं जुहोत्यश्वमेव मेधसा समर्धयति॥ १॥

आज्येन जुहोति मेधो वा आज्यं मेधोऽश्वस्तोमीयं मेधसैवास्मिंस्तन्मेधो दधात्याज्येन जुहोत्येतद्वै देवानां प्रियं धाम यदाज्यं प्रियेणै वैनान्धाम्ना समर्द्धयत्यश्वस्तोमीयः हुत्वा द्विपदा जुहोत्यश्वो वा अश्वस्तोमीयं पुरुषो द्विपदा द्विपाद्वै पुरुषो द्विः प्रतिष्ठस्तदेनं प्रतिष्ठया समर्द्धयति॥ २॥

## BRĀHMAṆA VI

1. In all the worlds, *Mṛtyu*, the causes of death are inhere. If oblations are not offered to them, death will catch hold of him in each of the worlds. By offering oblations to *Mṛtyu*, he overcomes death in each world.

2. They now- "If he were to offer oblations to the causes of death saying to this Death-*Svāhā*; to this Death-*Svāhā* —he will be in the process, making enemies of many (causes of ) deaths and would ultimately give himself over to death." So he offers only one oblation to one of them- "to *Mṛtyu-Svāhā*". There is only one cause of death in the yonder world, namely hunger. Only that hunger in the yonder world, he conquers.

3. The second oblation he offers saying "to *Brahmahatyā-Svāhā*." For, a killing other than that of a brahman is not *Mṛtyu* (a cause of death). This is the evident cause of death; namely, the killing of a brahmin. He thus overcomes the sure cause of death. This is what *Muṇḍibha Audarya* discovered as an expiation for killing a brahmin. When he offers oblation to *Brahmahatyā*, he pleases the *Mṛtyu* himself with the offering and thereby rendering himself absolutely worthy (fully immunised to sin), he effects a remedy for the killer of a brahmin. Hence at whosoever's *Aśvamedha* this oblation is offered, if someone among his subjects happens to kill a brahmin subsequently, he is providing such a one (killer) with a remedy. (Sixth Brāhmaṇa Ends.)

## BRĀHMAṆA VII

1. From the horse that was slaughtered, its *Medhas* (life-sap) came out. It became the *Aśvastomīya* oblations. When he offers the *Aśvastomīya* oblations, he enriches the horse with that life-sap.

2. He makes the *Aśvastomīya* offerings with *ghee*, for, *ghee* is the life-sap. So, by means of life-sap he supplies it with *Medhas*. He makes offering with *ghee*, for, *ghee* is the favourite resort of the gods. So, he gratifies them with their own favourite resort. After offering the *Aśvastomīya* oblations, he offers the *Dvipadā* oblations (oblations made with *mantras* saving two feet each). The *Aśvastomīya* is indeed the horse and man is two-footed; supported on two feet as he is, he is supplied with his support.

तदाहुरश्वस्तोमीयं पूर्व होतव्यां ३ द्विपदा ३ इति पशवो वा अश्वस्तोमीयं पुरुषो द्विपदा यदश्वस्तोमीय हुत्वा द्विपदा जुहोति तस्मात्पुरुष उपरिष्टात्पशूनधितिष्ठति षोडशाश्वस्तोमीया जुहोति षोडशकला वै पशवः सा पशूनां मात्रा पशूनेव मात्रया समर्द्धयति यत्कनीयसीर्वा भूयसीर्वा जुहुयात्पशून्मात्रया व्यर्द्धयेत्वोडश जुहोति षोडषकला वै पशवः सा पशूनां मात्रा पशूनेव मात्रया समर्द्धयति नान्यामुत्तमामाहुतिं जुहोति यदन्यामुत्तमामाहुतिं जुहुयात्प्रतिष्ठायै[1] च्यवेत द्विपदा उत्तमा जुहोति प्रतिष्ठा वै द्विपदाः प्रत्येव तिष्ठति जम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति वरुणो वै जम्बकः साक्षादेव वरुणमवयजते शुक्लस्य खलतेर्विक्लिधस्य पिङ्गाक्षस्य मूर्धनि जुहोत्येतद्वै वरुणस्य रूपꣳ रूपेणैव वरुणमव यजते ॥३॥

द्वादश ब्रह्मौदनानुत्थाय निर्वपति द्वादशभिर्वैष्टिभिर्यजते तदाहुर्यज्ञस्य वा एतद्रूपं यदिष्टयो यदिष्टिभिर्यजतोपनामुक एनं यज्ञः स्यात्पापीयाꣳस्तु स्याद्यातयामानि वा एतद्विजानस्य च्छन्दाꣳसि भवन्ति तानि किमेतावदाशु प्रयुञ्जीत सर्वा वै सꣳस्थिते यज्ञे वागाप्यते सात्रासा यातयाम्नी भवति क्रूरीकृतेव हि भवत्यरुष्कृता वाग्वै यज्ञस्तस्मान्न प्रयुञ्जीतेति द्वादशैव ब्रह्मौदनानुत्थाय निर्वपेत्प्रजापतिर्वा ओदनः प्रजापतिः संवत्सरः प्रजापतिर्यज्ञः संवत्सरमेव यज्ञमाप्नोत्युपनामुक एनं यज्ञो भवति न पापीयान्भवति॥४॥ इति सप्तमं ब्राह्मणम्॥

## अष्टमं ब्राह्मणम्

एष वै प्रभूर्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रभूतं भवत्येष वै विभूर्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव विभूतं भवत्येष वै व्यष्टिर्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यष्टं भवत्येष वै विधृतिर्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव विधृतं भवत्येष वै व्यावृत्तिर्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव व्यावृत्तं भवत्येष वै ऊर्जस्वान्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेवोर्जस्वद्भवत्येष वै पयस्वान्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव पयस्वद्भवत्येष ब्रह्मवर्चसी नाम यज्ञो यत्रैतेन यज्ञेन यजन्त आ ब्राह्मणो ब्रह्मवर्चसी जायत एष वा अतिव्याधी नाम यज्ञो यत्रैतेन यज्ञेन यजन्त

१. जुहुयात्प्र प्रतिष्ठायै

**3.** Now they ask- "Is the *Aśvastomīya* to be offered first on the *Dvipadās*?" *Aśvastomīyas* are cattle and *Dvipadā* are men. By offering first *Aśvastomīya* and then the *Dvipadā*, man gets established over the cattle. He offers sixteen *Aśvastomīya* oblations, for the cattle have sixteen *Kalās* on parts (the head, neck, trunk, tail, four legs and eight claws). That is the measure of the cattle. Thereby he enriches the *Paśus* with their measure. If he offers less or more number of oblations, he will cause damage to the parts of the cattle. So he offers only sixteen, for the cattle have sixteen *Kalās*. That is the measure of the cattle and thereby he enriches cattle with their measure. No other final oblation, he offers. If he were to offer an extra final oblation, he would fall from his base. Lastly he offers the *Dvipadā* oblations. *Dvipadās* are the base, by which he gets established. (He says) "To Jambaka — *Svāhā*" and makes the final offering at the *Avabhṛta* (oblation). Varuṇa is indeed the Jambaka and manifestly he redeems himself from Varuṇa. He makes this offering on the head of a man with white spots, bald head, protruding teeth (or sweating), brown-eyed. This is the form of Varuṇa; by his form, he appeases Varuṇa with this offering.

**4.** Emerging (from the waters), he prepares twelve meals of cooked rice (*Brahmaudana*) for the priests; or performs twelve *Iṣṭis*. In this connection they say- "these *Iṣṭis* are a form of sacrifice and the sacrifice will (by the *Iṣṭis*) become stale." How can he use them so soon? For, by the completion of the sacrifice, the speech (Vedic *mantras*) has been completely gained and being so gained here it is completely exhausted and (by further using it) it becomes as it were wounded or over-strained. Speech is indeed sacrifice and so it should not be put to use. So, only twelve *Brahmaudanas* should be prepared after emerging from the *Avabhṛta*. For, cooked rice is Prajāpati and Prajāpati is the year - Prajāpati is sacrifice and thus it is a year, the sacrifice that he thus gains and the sacrifice becomes favourable disposed to him and he does not become a sinner. (Seventh Brāhmaṇa Ends.)

## BRĀHMAṆA VIII

**1.** This sacrifice is called *Prabhūr* (strengthful). Where they perform this sacrifice, there everything becomes strong.

This sacrifice is called *Vibhūr* (plentiful). Where they perform this sacrifice, there everything is in plenty.

आ राजन्योऽतिव्याधी जायत एष वै दीर्घो नाम यज्ञो यत्रैतेन यज्ञेन यजन्त आ दीर्घारण्यं जायत एष वै कल्मसिर्नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव कल्मसं भवत्येष वै प्रतिष्ठा नाम यज्ञो यत्रैतेन यज्ञेन यजन्ते सर्वमेव प्रतिष्ठितं भवति॥१॥ इति अष्टमं ब्राह्मणम्॥

## नवमं ब्राह्मणम्

अथातः प्रायश्चित्तीनां यद्यश्वो वडवाः स्कन्देद्वायव्यं पयोऽनुनिर्वपेद्वायुर्वै रेतसां विकर्ता प्राणो वै वायुः प्राणो हि रेतसां विकर्ता रेतसैवास्मिꣳस्तद्रेतो दधाति॥१॥

This sacrifice is called *Vyaṣṭi* (fruitful). Where they perform this sacrifice, there everything is fruitful.

This sacrifice is called *Vidhṛti* (excellence). Where they perform this sacrifice, there everything becomes excellent.

This sacrifice is called *Vyāvṛtti* (safeguard). Where they perform this sacrifice, there everything becomes well - protected.

This sacrifice is called *Ūrjasvān* (rich in energy). Where they perform this sacrifice, there everything becomes abounding in energy.

This sacrifice is called *Payasvān* (rich in essence). Where they perform this sacrifice, there everything is rich in *Payas* or *Rasa*.

This sacrifice is called *Brahma Varcasī* (rich in Brahminical lustre). Where they perform this sacrifice, there a *Brāhman* is born with lustre.

This sacrifice is called *Ativyādhi* (excelling in hitting the target). Where they perform this sacrifice, there the *Kṣatriya* is born good at archery.

This sacrifice is called *Dīrgha* (long or wide). Where they perform this sacrifice, there the forest area becomes wide (as protection or green cover and as hunting ground).

This sacrifice is called *Kḷpti* (fitness). Where they perform this sacrifice, there everything is fit and trim.

This sacrifice is called *Pratiṣṭhā* (foundation). Where they perform this sacrifice, there everything is stable or established. (Eighth Brāhmaṇa Ends.)

**BRĀHMAṆA IX**

1. Now we take up the expiations - if the sacrificial horse is to mate with a mare, an additional milk oblation, he should offer to Vāyu. Vāyu, doubtless is the one who transforms the seed. Vāyu is indeed *Prāṇa* and *Prāṇa* is the one that transforms the seed. By means of seed he thus puts seed into it.

अथ यदि स्रामो विन्देत्पौष्णं चरुमनुनिर्वपेत्पूषा वै पशूनामिष्टे स यस्यैव पशवो यः पशूनामिष्टे तमेवैतत्प्रीणात्यगदो हैव भवति॥२॥

अथ यद्यक्षतामयो विन्देद्वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडाशमनुनिर्वपेदियं वै वैश्वानर इमामेवैतत्प्रीणात्यगदो हैव भवति॥३॥

अथ यद्यक्ष्यामयो विन्देत्सौर्यं चरुमनुनिर्वपेत्सूर्यो वै प्रजानां चक्षुर्यदा ह्येवैष उदेत्यथेदꣳ[1] सर्वं चरति चक्षुषैवास्मिꣳस्तच्चक्षुर्दधाति स यच्चरुर्भवति चक्षुषा ह्ययमात्मा चरति॥४॥

अथ यद्युदके म्रियेत वारुणं यवमयं चरुमनुनिर्वपेद्वरुणो वा एतं गृह्णाति योऽप्सु म्रियते सा यै वैनं देवता गृह्णाति तामेवैतत्प्रीणाति सास्मै प्रीतान्यमालं भायानुमन्यते तयानुमतमालभते स यद्यवमयो भवति वरुण्याः हि यवाः॥५॥

अथ यदि नश्येत्रिहविषमिष्टिमनुनिर्वपेद्द्यावापृथिव्यमेककपालं पुरोडाशं वायव्यं पयः सौर्यं चरुं यद्वै किञ्च नश्यत्यन्तरैव तदद्यावापृथिवी नश्यति तद्वायुरुपवात्यादित्योऽभितपति नैताभ्यो देवताभ्य ऋते किञ्चन नश्यति सैषा पृथगेव नष्टवेदनी स यद्यस्याप्यन्यन्नश्येदेतयैव यजेतानु हैवैतद्विन्दत्यथ[2] यद्यमित्रा अश्वं विन्देरन्यदि वा म्रियेत यदि वाप्स्वन्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः॥६॥
इति नवमं ब्राह्मणम्॥

॥ इति तृतीयोऽध्यायः ॥

१. अथैतꣳ
२. हैवैन

**2.** If the horse should contact some ailment, he should in addition offer a *caru* to Pūṣa. Pūṣa is the lord of the cattle. He thus pleases the one who is the lord of the cattle and it (horse) becomes free from the ailment.

**3.** If the horse becomes sick without any visible injury, he should offer, in addition, a *Puroḍāśa* in tweleve potsherds with earth used as potsherds, to *Vaiśvānara. Vaiśvānara* is this earth and thereby he pleases her and it (horse) gets free from sickness.

**4.** If the horse suffers from some eye-ailment, a *caru* to Sūrya should be prepared in addition. The Sun is indeed the eye of the living beings.When he rises, all these beings start moving. By means of eye, he endows it with eye in the fire of that *caru.* It is by means of the eye, this self (body) moves.

**5.** If the horse were to die in water, he should offer a *caru* made of barley to Varuṇa, in addition. Because it is Varuṇa who captures that which dies in water. That deity which captures is thereby appeased. So pleased that deity approves of another horse for the purpose of immolation. Approved by that deity, he seizes another horse. The *caru* is of barley for, barley belongs to Varuṇa.

**6.** If the horse were to get lost, let him, in addition, perform an *Iṣṭi* with three *Havis.* A *Puroḍāśa* in one potsherd to the heven and earth; a milk oblation to Vāyu ; and a *caru* to Sun; for, that which is lost is lost between heaven and earth; the wind blows upon it and the Sun shines upon it. Without (the involvement ) of these deities(Heaven, Earth, Vāyu and Sun) nothing gets lost. These offerings by themselves are efficacious in recovering the lost thing. So even if something else gets lost, let him perform this *Iṣṭi* and he is sure to find it. If his enemies were to capture the horse or if it were to die (on the ground) or in waters, let him procure another horse and consecrate it by sprinkling . This indeed is the expiation in that case. (Ninth Brāhmaṇa Ends.)

**(Chapter Three Ends.)**

## चतुर्थोऽध्यायः

### प्रथमं ब्राह्मणम्

प्रजापतिरकामयत सर्वान्कामानाप्नुयाꣳ सर्वा व्यष्टीर्व्यश्नुवीयेति स एतमश्वमेधं त्रिरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वा सर्वान्कामानाप्नोत्सर्वा व्यष्टीर्व्याश्नुत सर्वान् ह वै कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते॥१॥

तदाहुः कस्मिन्नृतावभ्यारम्भ इति ग्रीष्मेऽभ्यारभेतेत्यु हैक आहुर्ग्रीष्मो वै क्षत्रियस्यर्त्तुः क्षत्रिययज्ञ उ वा एष यदश्वमेध इति॥२॥

तद्वै वसन्त एवाभ्यारभेत वसन्तो वै ब्राह्मणस्यर्तुर्य उ वै कश्च यजते ब्राह्मणीभूयेवैव यजते तस्माद्वसन्त एवाभ्यारभेत॥३॥

सा यासौ फाल्गुनी पौर्णमासी भवति तस्यै पुरस्तात्षडहे वा सप्ताहे वर्त्विज उपसमायन्त्यध्वर्युश्च होता च ब्रह्मा चोद्गाता चैतान्वा अन्वन्य ऋत्विजस्तेभ्योऽध्वर्युश्चातुष्प्राश्यं ब्रह्मौदनं निर्वपति तस्योक्तं ब्राह्मणं चतुरः पात्राꣳश्चतुरोऽञ्जलीꣳश्चतुरः प्रसृतां द्वादशविध द्वादशमासाः संवत्सरः सर्वꣳसंवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुध्यै॥४॥

तमेते चत्वार ऋत्विजः प्राश्नन्ति तेषामुक्तं ब्राह्मणं तेभ्यश्चत्वारि सहस्राणि ददाति सर्वं वै सहस्रꣳ सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुध्यै चत्वारि च सुवर्णानि शतमानानि हिरण्यानि तस्यो एवोक्तम्॥५॥

अथास्मा अध्वर्युर्निष्कं प्रतिमुञ्चन्वाचयति तेजोऽसि शुक्रममृतमिति तेजो वै शुक्रममृतꣳ हिरण्यं

## Chapter Four

### BRĀHMAṆA I

1. Prajāpati wished "let me achieve all my desires; let me attain all excellence." He discovered this three day's *Soma* sacrifice, the *Aśvamedha* and took possession of it and performed it. Having performed it, he achieved all his desires and attained all excellence. He who performs *Aśvamedha* achieves all his desires and attains all excellence.

2. Now they ask- "In what season it should be begun?" Some say "It should be started in summer for summer is the season of the *Kṣatriyas* and this *Aśvamedha* is a sacrifice of the *Kṣatriyas.*"

3. However, it should be started in the spring season. *Vasant* (spring) is the season of the brāhmin. Whoever performs it, he does so after gaining brāhmin - hood. So, it should be started in the spring.

4. Six days or Seven days before that full moon day of the *Phālguna* month, the *Rtviks* assemble. They are the Adhvaryu, the Hotā, the Brahmā, the Udgātā and in these, the other priests are included. The Adhvaryu prepares for them the *Brahmaudana* (rice preparation) sufficient for four persons. The import of this has been explained. Four bowlfuls, four *Añjalis* (both the palm held together as a cup and filled) and four palmfuls - thus twelve-fold it comes to. There are twelve months for the year and year is everything and *Aśvamedha* is everything. To gain everything and to own everything (he gives thus).

5. Those four *Rtviks* eat it. Its significance has been explained. He gives them four thousand (cows as *Dakṣinā*). Thousand means 'all' and *Aśvamedha* is all and it is for gaining all and for owning everything (he gives). Four gold plates each weighing hundred grains (he gives them). This has also been explained.

6. The Adhvaryu after hanging a gold ornament (pendant) round him (Yajamāna) makes him say - "You are fire; you are light (or seed); you are immortality." Because, gold indeed is fire, light (seed and immortality). "Thereby he bestows upon him fiery spirit, brilliance (potency) and immortality." "O, bestower of longivity, protect my life" — he thereby confers

तेज एवास्मिञ्छुक्रममृतं दधात्यायुष्पा आयुर्मे पाहीत्यायुरेवास्मिन्दधात्यथैनमाह वाचं यच्छेति वाग्वै यज्ञो यज्ञस्यैवाभ्यारम्भाय॥६॥

चतस्रो जाया उपकल्प्ता भवन्ति महिषी वावाता परिवृक्ता पालागली सर्वा निष्किण्योऽलङ्कृता मिथुनस्यैव सर्वत्वाय ताभिः सहाग्न्यागारं[1] प्रपद्यते पूर्वया द्वारा यजमानो दक्षिणया पत्न्यः॥७॥

सायमाहुत्याः हुतायां जघनेन गार्हपत्यमुदङ्ङवातया[2] सह संविशति तदेवापीतराः संविशन्ति सोऽन्तरोरू असंवर्तमानः [3]शतेऽनेन तपसा स्वस्ति संवत्सरस्योदृचः समश्नवा इति॥८॥

प्रातराहुत्याः हुतायामध्यवर्युः पूर्णाहुतिं जुहोति सर्वं वै पूर्णः सर्वमश्वमेधः सर्वस्याध्यै सर्वस्यावरुध्यै तस्यां वरेण वाचं विसृजते वरं ददामि ब्रह्मण इति सर्वं वै वरः सर्वमश्वमेधः सर्वस्याध्यै सर्वस्यावरुध्या अथ योऽस्य निष्कः प्रतिमुक्तो भवति तमध्वर्यवे ददात्यध्वर्यवे ददमृतमायुरात्मन्धत्तेऽमृतः ह्यायुर्हिरण्यम्॥९॥

अथाग्नेयीमिष्टिं निर्वपति पथश्च कामाय यज्ञमुखस्य चाच्छम्बट्कारायाथो अग्निमुखा[4] उ वै सर्वदेवताः सर्वे कामा अश्वमेधे मुखतः सर्वान्देवान्प्रीत्या[5] सर्वान्कामानाप्नवानीति तस्यै पञ्चदश सामिधेन्यो भवन्ति पञ्चदशो वै वज्रो वीर्यं वज्रो वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पात्मानमपहते वार्त्रघ्नावाज्यभागौ पाप्मा वै वृत्रः पाप्मनोऽपहत्या अग्निर्मूर्धा दिवः ककुद्धुवो यज्ञस्य रजसश्च

१. सहाग्न्यगारं
२. त्यमुदङ्वावा
३. शेते
४. अग्नि
५. प्रीत्वा

longivity upon him. He (Adhvaryu) then tells the Yajamāna -"control your speech"; with a view to comencing the sacrifice; for sacrifice is speech.

**7.** Four wives of the Yajamāna are there in attendance. (They are) the consecrated Queen, favourite spouse, the neglected wife and the *Pālāgalī* (the barren wife) – all of them adorned and wearing golden pendants, to ensure completeness of conjugal union. With them he (the Yajamāna) enters the sacrificial hall; the Yajamāna enters through the eastern gate and the wives through the southern.

**8.** After offering the evening oblations, he lies down with his favourite spouse behind the *Gārhapatya*, with his head towards the north. At the same place the other wives also lie down. He lies in her lap without embracing her, thinking "let me by this self-control, reach the end of the year (of protecting the horse) successfully."

**9.** After the morning oblation is offered, the Adhvaryu offers the *Pūrṇāhuti*, in order that the Yajamāna may achieve everything and he may own everything. Because '*Pūrṇa*' means 'all' and *Aśvamedha* is all. At this (offering) he releases his speech to grant a boon and says "I grant the boon to the Brahmā (priest)." This is to gain and secure everything; for a boon is everything and *Aśvamedha* is everything. Then the gold pendant which is on his neck is removed and he gives it to the Adhvaryu. By giving it to the Adhvaryu, he gains for himself immortal life, for gold is immortal life.

**10.** He then gets ready an *Iṣṭi* (called *Pathikṛt*) to Agni for gaining the path and to avoid losing the mouth (starting) of this sacrifice. For, all deities have Agni for their mouth and *Aśvamedha* contains all objects of desire. He (does so, thinking) "having pleased all the gods at the start, may I obtain all my desires." For that (offering) there are fifteen *Sāmidheni* chants. The thunderbolt is fifteen-fold and thunderbolt symbolises vitality. Thus with the thunderbolt, vitality, the Yajamāna drives away all evil. The two *Ājayabhāgas* are given to the killer of *Vṛtra. Vṛtra* symbolises evil and this is to destroy the evil. "Agni, the head and the realm of space" - (the *mantras* starting thus) he utters in a whisper as the invitatory chant and offering *mantra* of the main oblation. The one contains the word '*Mūrdhan*' and the other contains the word '*Bhuvaḥ*' (for '*sad*'). This yonder one which burns (sun) is *Mūrdhā* and it is doubtless for securing him (the sun). Why the other *mantra* contains the verb '*sad*' (*Bhūḥ*)

नेतेत्युपांशु हविषो यज्यानुवाक्ये मूर्धन्वत्यन्या भवति सद्वत्यन्यैष वै मूर्धा य एष तपत्येतस्यैवावरुध्या अथ यत्सद्वती सदेवावरुन्धे विराजौ संयाज्ये सर्वदेवत्यं वा एतच्छन्दो यद्विराट् सर्वे कामा अश्वमेधे सर्वान्देवान्प्रीत्वा सर्वान्कामानाप्नवानीति हिरण्यं दक्षिणा सुवर्णं शतमानं तस्योक्तं ब्राह्मणम्॥१०॥

अथ पौष्णीं निर्वपति पूषा वै पथीनामधिपतिरश्वायैवैतत्सस्त्ययनं[6] करोत्यथो इयं वै पूषेमामेवास्मा एतद्गोप्त्रीं करोति तस्य हि नार्त्तिरस्ति न ह्वला यमियमध्यन्गोपायतीमामेवास्या एतद्गोप्त्रीं करोति तस्यै सप्तदश सामिधेन्यो भवन्ति सप्तदशो वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाप्त्यै वृधन्वन्तावाज्यभागौ यजमानस्यैव वृद्ध्यै पूषंस्तव व्रते वयं पथस्पथः परिपतिं वचस्येत्युपांशु हविषो याज्यानुवाक्ये व्रतवत्यन्या भवति पथन्वत्यन्या वीर्यं वै व्रतं वीर्यस्याप्त्यै वीर्यस्यावरुद्धया अथ यत्पथन्वत्यश्वायैवैतत्स्वस्त्ययनं करोत्यनुष्टुभौ संयाज्ये वाग्वा अनुष्टुब्वाग्वै प्रजापतिः प्रजापतिरश्वमेधोऽश्वमेधस्यैवाध्यै वासः शतं दक्षिणा रूपं वा एतत्पुरुषस्य यद्वासस्तस्माद्यमेव कश्च सुवाससमाहुः को न्वयमिति रूपसमृद्धो हि भवति रूपेणैवैनं समर्द्धयति शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते॥११॥

एतस्यां तायमानायामश्वं निक्त्वोदानयन्ति यस्मिन्त्सर्वाणि रूपाणि भवन्ति यो वा जवसमृद्धः सहस्राहं पूर्व्यं यो दक्षिणायां धुर्यप्रतिधुरस्तद्यत्सर्वरूपो भवति सर्वं वै रूपं सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुध्या अथ यज्जवसमृद्धो वीर्यं वै जवो वीर्यस्याप्त्यै वीर्यस्यावरुध्या अथ

६. वैतत्स्व

is because by that he gains the '*sad*' (truly existing). The *Samyājas* are in the form of two chants in the Virāḍ metre. This metre is one that belongs to all the gods and all objects of desire are contained in the *Aśvamedha.* He thinks "having pleased all the gods, let me achieve all my desires." For this, gold is *Dakṣiṇā*; gold weighing hundred grains. Its purposed has been explained.

**11.** He then prepares a *caru* for Pūṣa; for Pūṣa is the over-lord of the paths; this is to ensure success in the journey of the horse. Now, this earth is Pūṣa and thereby he makes her its protector. He who is protected by this earth, neither suffers from injury nor from failure. There are seventeen *Sāmidheni* chants; for, Prajāpati is seventeen-fold and Prajāpati is the *Aśvamedha* and hence it is for gaining the *Aśvamedha.* The *Ājaybhāgas* are with the chants containing the '*Vṛdhan*' (growth), for the sake of growth of the Yajamāna. "O Pūṣa, in your *Vrata* (austerity).... we singers of your glory path by path, have reached the lord..." Thus he mutters in a low voice. The *Anuvākya* (invitatory chant) for this is the verse containing the word '*Vrata*' means vitality and it is for obtainment of vitality and for owning vitality. As to the other (containing the word '*Pathin*', it is for securing successful journey for the horse. The *Anuvākya* and *Yājya* for the *Sviṣṭakṛt* offerings are in two Anusṭhubh metres, For, Anuṣṭubh is speech and speech is Prajāpati; Prajāpati is the *Aśvamedha.* Hence it is for gaining of *Aśvamedha.* The *Dakṣiṇā* for this are one hundred garments; for garment is man's external appearance. That is why on seeing a well-dressed man, people ask- "Who can he be, for he is arresting the attention of others by external appearance." There are hundred garments, for man's life-span is hundred years and he has hundred energy. He thus gains for himself life-span, energy and vigour.

**12.** While this offering to Pūṣa is being made, the horse is brought after being washed. That horse is decorated with all colours (or is very fast-moving), worth a thousand cows (as price); in its youth and it has no equal to be yoked to its right side. It has all colours because appearance means everything and *Aśvamedha* is everything. So, for the sake of gaining everything (it is decorated with all colours) and for owning everything. That it is very fast is because speed means vitality and it is for gaining and owning vitality. Why it should be worth a hundred cows is because hundred means everything and *Aśvamedha* is everything so it is for the gaining of everything; for owning everything. As to its being in its prime of youth, it is for the sake of his obtaining unlimited vigour; for such a one in the prime of youth attains unlimited vigour. Why it is without

यत्सहस्रार्हः सर्वं वै सहस्रꣳ सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुध्या अथ यत्पूर्व्य एष वा अपरिमितं वीर्यमभिवर्धते यत्पूर्व्योऽपरिमितस्यैव वीर्यस्यावरुध्या अथ यद्दक्षिणायां धुर्यप्रतिधुर एष वा एष य एष तपति न वा एतं कश्चन प्रति प्रतिरेतस्यैवावरुद्ध्यै॥१२॥

तदु होवाच भाल्लवेयो द्विरूप एवैषोऽश्वः स्यात्कृष्णसारङ्गः प्रजापतेर्वा एषोऽक्ष्णः समभवद्द्विरूपं वा इदं चक्षुः शुक्लं चैव कृष्णं च तदेनꣳ स्वेन रूपेण समर्द्धयतीति॥१३॥

अथ होवाच सात्ययज्ञस्त्रीरूप[७] एवैषोऽश्वः स्यात्तस्य कृष्णः पूर्वार्धः शुक्लोऽपरार्धः कृत्तिकाञ्जिः पुरस्ताद्यत्कृष्णः पूर्वार्धो भवति यदेवेदं कृष्णमक्ष्णस्तदस्य तदथ यच्छुक्लोऽपरार्धो यदेवेदꣳ शुक्लमक्ष्णस्तदस्य तदथ यत्कृत्तिकाञ्जिः पुरस्तात्सा कनीनका स एव रूपसमृद्धोऽतो यतमोऽस्योपकल्पेत बहुरूपो वा द्विरूपो वा त्रिरूपो वा कृत्तिकाञ्जिस्तमालभेत जवेन त्वेव समृद्धः स्यात्॥१४॥

तस्यैते पुरस्ताद्रक्षितार उपक्लृप्ता भवन्ति राजपुत्राः कवचिनः शतꣳ राजन्या निषङ्गिणः शतꣳ सूतग्रामण्यां पुत्रा इषुपर्षिणः[८] शतं क्षात्र संग्रहीतृणां पुत्रा दण्डिनः शतमश्वशतं निरष्टं निरमणं यस्मिन्नेनमपिसृज्य रक्षन्ति॥१५॥ इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

अथ सावित्रीमिष्टिं निर्वपति सवित्रे प्रसवित्रे द्वादश कपालं पुरोडाशꣳ सविता वै प्रसविता सविता म इमं यज्ञं प्रसुवादिति तस्यै पञ्चदश समिधेन्यो भवन्ति वार्त्रघ्नावाज्यभागौ य इमा विश्वा जातान्या देवो यातु सविता सुरत्न इत्युपाꣳशु हविषो याज्यानुवाक्ये विराजौ संयाज्ये हिरण्यं दक्षिणा सुवर्णꣳ शतमानं तस्योक्तं ब्राह्मणम्॥१॥

७. त्रिरूप
८. परिषिणः

an equal to be yoked to its right side - for, that horse is indeed he that shines yonder and definitely nobody is there to equal him (sun); and it is for owning that (status of the sun).

**13.** Now Bhāllaveya said- "that horse should be of two colours i.e., black spotted (one of the colours being black)." For that horse came out of Prajāpati's eye and the eye has two colours; white and black. Thus he endows it with its own form (when it is black-spotted).

**14.** Then Sātyayagñi, however, said - "this should be of three colours. Its front half should be black, its hind part should be white and a mark of a cart at its fore-head." The black front portion is the same as this black portion of the eye. The white hind portion is the same as this white part of the eye. The mark of a cart in front stands for the pupil of the eye. Such a one is indeed the most appropriate in form. Which ever of these (varieties) multi-coloured, two-coloured are three-coloured, it should have the mark of the cart on the fore-head for being fit for immolation and it should ofcourse be very speedy.

**15.** Guards are stationed ready in front. One hundred princes wearing armours; a hundred warriors with swords; a hundred sons of village-headmen, with quivers filled with arrows; a hundred sons of revenue officers and chari-oteers, wielding lathis and a hundred horses more than twenty-four years old, besides the one let loose (as sacrificial horse) which is gaured. (First Brāhmaṇa Ends.)

**BRĀHMAṆA II**

**1.** He then gets ready an *Iṣṭi* to Savita consisting of a *Puroḍāśa* in twelve potsherds to Savita, the begetter (thinking) "may Savita beget this my sacri-fice"; for Savita is indeed the begetter. For that there are fifteen *Sāmidheni* chants and two *Ājaybhāgas* to the killer of Vṛtra. "He who calls for all these beings..." and "may the divine Savita come here laden with treasures....." - these are uttered in a low tone as the invitatory and offering chants for the main oblations. Those chants for the *Sviṣṭakṛt* offering consist of two *mantras* in Virāḍ metre. The *Dakṣiṇā* for this is gold weighing a hundred grains. The import of this has been explained.

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयंसंभृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तं ब्राह्मणम्॥२॥

अथ द्वितीयां निर्वपति सवित्र आसवित्रे द्वादशकपालं पुरोडाशं सविता वा आसविता सविता म इमं यज्ञमासुवादिति तस्यै सप्तदश सामिधेन्यो भवन्ति सद्वन्तावाज्यभागौ सदेवावरुन्धे विश्वानि देवसवितः सघा[1] नो देवः सविता सहावेत्युपांशु हविषो याज्यानुवाक्ये अनुष्टुभौ संयाज्ये रजतंहिरण्यं दक्षिणा नानारूपताया अथो उत्क्रमायानपक्रमाय शतमानं भवति शतायुर्वै पुरुषः शतेन्द्रिय आयुरेवेन्द्रियं वीर्यमात्मन्धत्ते॥३॥

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नंस्तिस्रः स्वयं संभृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तं ब्राह्मणम्॥४॥

अथ तृतीयां निर्वपति सवित्रे सत्यप्रसवाय द्वादशकपालं पुरोडाशमेष ह वै सत्यः प्रसवो यः सवितुः सत्येन मे प्रसवेनेमं यज्ञं प्रसुवादिति तस्यै सप्तदशैव सामिधेन्यो भवन्ति रयिमन्तावाज्यभागौ वीर्यं वै रयिर्वीर्यस्यास्तयै वीर्यस्यावरुद्ध्या आ विश्वदेवंसत्पतिं न प्रमिये सवितुर्दैव्यस्य तदित्युपांशु हविषो याज्यानुवाक्ये नित्ये संयाज्ये नेद्यज्ञपथादयानीति क्लृप्त एव यज्ञेऽन्ततः प्रतितिष्ठति त्रिष्टुभौ भवत[2] इन्द्रे वै वीर्यं त्रिष्टुबिन्द्रियस्यैव वीर्यस्यावरुद्ध्यै हिरण्यं दक्षिणा सुवर्णंशतमानं तस्योक्तं ब्राह्मणम्॥५॥

१. सद्या
२. इन्द्रियं

**2.** When the *Prayājas* (fore-offerings) of this *Iṣṭi* are being offered, a brahmin lute-player, striking up the *Uttara Mandra* tune sings on the south, three *Gāthās* (euological verses) composed by himself (to mean) "so, he performed sacrifice; so he conquered." Its significance has been told.

**3.** He then gets ready the second offering consisting of a *Puroḍāsa* in twelve potsherds to Savita-Asavita (thinking) "may Savita encourage this my sacrifice." Because, Savita is one who prompts. For that there are seventeen *Sāmidheni* chants and two *Ājaybhāgas* with *mantras* having the word '*sad*'. By this he owns the truly existent. "O god Savita, all troubles you keep away from us..... etc., and "may that mighty god Savita send us riches.....etc.," These *mantras* are muttered in a low voice, as *Anuvākya* and *Yājya* formula for the main oblation. The *mantras* for the *Sviṣṭakṛt* are two in Anuṣṭhubh metre. The *Dakṣiṇā* for this is silver for the sake of variety of colours and for the forward marching of the horse without coming in the reverse. Its (silver's) weight should be a hundred grains; for, man has hundred years life-span and hundred energies; thus to secure longivity and energy (it should weigh hundred grains).

**4.** When the *Prayājas* are being offered in that *Iṣṭi*, a brahmin who sings playing on the lute, striking up the *Uttara Mandra* tune, signs on the southern side three *Gāthās* (euological verses) composed by himself (to mean). "Thus he performed sacrifice; thus he conquered." Its import has been explained.

**5.** He then prepairs the third offering consisting of a *Puroḍāśa* in twelve potsherds to Savita - the *Satyaprasava* (of non-failing impulse); for, that indeed is non-failing which is the impulse of Savita. (He thinks) "May he impulse this sacrifice of mine with the non-failing impulse." For this too, there are seventeen *Sāmidheni* chants. The two *Ājayabhāgas* contain the word '*Rayim*' (wealth), for the sake of obtaining and owning vigour; for, wealth is vigour. "The all divine true lord....etc.," and "Indestructible is that (impulsion) of the divine Savita....etc.,". These are uttered in a low voice as the *Anuvākyas* and *Yājyas* of the main oblation. The *Sviṣṭakṛt* is offered with the usual ones (in Tṛṣṭhubh), thinking "I may not swerve from the path of sacrifice." Thereby he finally establishes himself in the regular sacrificial path. Those chants are in Tṛṣṭhubh for the sake of gaining and owning vitality, for Tṛṣṭhubh chants symbolise vitality in Indra. The *Dakṣiṇā* for this is gold and it should weigh a hundred grains. Its significance has been explained.

तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत उत्तरमन्द्रामुदाघ्नꣳ स्तिस्रः स्वयꣳ संभृता गाथा गायतीत्ययजतेत्यददादिति तस्योक्तं ब्राह्मणम्॥६॥

एतस्याꣳसꣳस्थितायामुपोत्थायाध्वर्युश्च यजमानश्चाश्वस्य दक्षिणे कर्ण आजपतो विभूर्मात्रा प्रभूः पित्रेति तस्योक्तं ब्राह्मणमथैनमुदञ्चं प्राञ्चं प्रसृजत एषा होभयेषां देवमनुष्याणां दिग्यदुदीची प्राची स्वायामेवैनं तद्दिशि धत्तो न वै स्व आयतने प्रतिष्ठितो रिष्यत्यरिष्ट्यै॥७॥

स आह देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितꣳ रक्षतेत्युक्ता मानुषा आशापाला अथैते दैवा आप्याः साध्या अन्वाध्या मरुतस्तमेत उभये देवमनुष्याः संविदाना अप्रत्यावर्तयन्तः संवत्सरꣳ रक्षन्ति तद्यं न प्रत्यावर्तयन्त्येष वा एष य एष तपति का[3] उ ह्येतमर्हति प्रत्यावर्तयितुं यद्ध्येन प्रत्यावर्तयेयुः परागेवेदꣳ सर्वꣳस्यात्तस्मादप्रत्यावर्तयन्तो[4] रक्षन्ति॥८॥

स आहाशापाला ये वा एतस्योदृचं गमिष्यन्ति राष्ट्रं ते भविष्यन्ति राजानो भविष्यन्त्यभिषेचनीया अथ य एतस्योदृचं न गमिष्यन्त्यराष्ट्रं ते भविष्यन्त्यराजानो भविष्यन्ति राजन्या विशोऽनभिषेचनीयास्तस्मान्मा प्रमदत स्नात्वाच्चैवैनमुदकान्निरुन्धीध्वं वडवाभ्यश्च ते यद्यद्ब्राह्मणजात मुपनिगच्छेत तत्तत्पृच्छेत ब्राह्मणाः कीयद्यूयमश्वमेधस्य वित्थेति ते ये न विद्युर्जिनीयात तान्त्सर्वं वा अश्वमेधः सर्वस्यैष न वेद यो ब्राह्मणः सन्नश्वमेधस्य न वेद सोऽब्राह्मणो ज्येय एव स पानं करवाथ[5] खादं निवपाथाथ यत्किञ्च जनपदे [6]कृतान्नꣳसर्वं वस्तत्सुतं तेषां रथकारकुल एव वो वसतिस्तद्ध्यश्वस्यायतनमिति॥९॥इति द्वितीयं ब्राह्मणम्॥

३. क
४. प्रत्यावर्त ꣳ
५. करवात्र
६. अकृतान्नं

**6.** When the fore-offerings of the *Iṣṭi* are in progress, a brahmin lute-player, after striking up the *Uttara Mandra* tune, signs on the southern side, three *Gāthās* (euological verses) composed by himself (to mean) "so he performed sacrifice; so he conquered." The significance of this has been explained.

**7.** After completing this *Iṣṭi*, the Adhvaryu and the Yajamāna get up and whisper into the right year of the horse - "plentiful by your mother and powerful by your father.....etc." Its significance has been told. They then set it free towards the north-east; for that region is the region of both gods and men. They thus let it go to its own region, to safeguard it from any injury. For one who is settled in his own abode suffers no injury.

**8.** He says " O gods ! Gaurdians of the quarters! Protect this horse consecrated for offering unto the gods." The (four groups of) human guardians of the four quarters have been told and now these are the divine ones; namely the *Āpyas*, the *Sādhyas*, the *Anvadhyas* and the Maruts. Both of these (groups), men and gods unitedly gaurd it for a year without (making it) turn back. This horse is none else than this yonder one (sun) who burns. Who dares to turn it back? If they succeed in turning him (sun) back, everything here would move in reverse order (get upset). Therefore they gaurd it without causing it to turn back.

**9.** He says "O Guardians of the quarters, those who will reach the completion of this (*Aśvamedha*) will happen to share royal power and become kings worthy of coronation. Those who do not reach the completion of this, they will have no share in royal power; they will not become kings and will end up as worthless *Kṣatriyas* or ordinary peasants unworthy of coronation. So, don't be careless; safeguard it from waters fit for bathing and from mares. Whenever you come across a brahmin, you ask him "How much you know of the *Aśvamedha* ?" If he does not know, you ignore him; because this *Aśvamedha* is everything and it is not within everybody's comprehension. If being a brahmin he does not know *Aśvamedha*; he is virtually a non-brahmin and as such to be condemned. You shall supply it (horse) with drink and provide fodder for it. Whatever food is prepared or eatables are available in the country, all that shall be within your reach. You will halt in the house of a carpenter (engaged in making chariots) because that is the abode of the horse. (Second Brāhmaṇa Ends.)

एकविंशतिः सवनीयाः पशवः सर्व आग्नेयास्तेषाꣳ समानं कर्मत्यु हैक आहुश्चतुर्विꣳशतिं त्वेवैतान् गव्यानालभेत द्वादशभ्यो देवताभ्यो द्वादश मासाः संवत्सरः सर्वꣳ संवत्सरः सर्वमश्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै॥८॥ इति तृतीयं ब्राह्मणम्॥

## चतुर्थं ब्राह्मणम्

एतेन हेन्द्रोतो दैवापः शौनको जनमेजयं पारिक्षितं याजयाञ्चकार तेनेष्ट्वा सर्वां पापकृत्याꣳ सर्वां ब्रह्महत्यामपजघान सर्वाꣳ ह वै पापकृत्याꣳ सर्वां ब्रह्महत्यामपहन्ति योऽश्वमेधेन यजते॥१॥

तदेतद्गाथयाभिगीतमासन्दीवति धान्यादꣳ रुक्मिणꣳ हरितस्रजम्। अबध्नादश्वꣳ सारङ्गं देवेभ्यो जनमेजय इत्येते एव पूर्वे अहनी॥२॥

ज्योतिरतिरात्रस्तेन भीमसेनमेते एव पूर्वे अहनी गौरतिरात्रस्तेनोरग्रसेनमेते[1] एव पूर्वे अहनी आयुरतिरात्रस्तेन श्रुतसेनमित्येते पारिक्षितीयास्तदेतद्गाथयाभिगीतं पारिक्षिता यजमाना अश्वमेधैः परोऽवरम्। अजहुः कर्म पापकं पुण्याः पुण्येन कर्मणेत्येते एव पूर्वे अहनी॥३॥

अभिजिदतिरात्रस्तेन ह पर आह्णार ईजे कौसल्यो राजा तदेतद्गाथयाभिगीतमह्णारस्य परः पुत्रोऽश्वं मेध्यमबन्धयद्धैरण्यनाभः कौसल्यो दिशः पूर्णा अमꣳ हतेत्येते एव पूर्वे अहनी॥४॥

विश्वजिदतिरात्रस्तेन ह पुरुकुत्सो दौर्ग्रहेणेज ऐक्ष्वाको राजा तस्मादेतदृषिणाभ्यनूक्तमस्माकमत्र पितरस्त आसन्त्सप्त ऋषयो दौर्ग्रहे बध्यमान इत्येते एव पूर्वे अहनी॥५॥

महाव्रतमतिरात्रस्तेन ह मरुत्त आविक्षित ईज आयोगवो राजा तस्य ह ततो मरुतः परिवेष्टारोऽग्निः क्षत्त विश्वे देवाः सभासदो बभूवुस्तदेतद्गाथयाभिगीतं मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे।

१. स्तेनोग्रसेन

**8.** "The *Savanīya Paśus* are twenty-one—all meant for Agni and they have the same formalities" –So say some people. But let him immolate those twenty-four *Paśus* of cow's species for the twelve deities. For, a year has twelve months; the year is everything and *Aśvamedha* is everything. So, for the sake of gaining everything and owning everything (let him immolate twenty-four *Gavya Paśus*). (Third Brāhmaṇa Ends.)

**BRĀHMAṆA IV**

**1.** Once, Indrota, Daivāpa Śaunaka caused Janamejaya, the son of Parīkṣit to perform this (*Aśvamedha*) sacrifice. By this sacrifice, he (Janamejaya) put an end to all evil actions, all killing of brahmins. So, he who performs *Aśvamedha* puts an end to all evil acts and all *Brahmahatyā*.

**2.** It is on this, indeed, there is a *Gāthā* (euology) sung– "At *Āsandivatī* (city of throne), Janamejaya tied (to the *Yūpa*), a black-spotted, grain-eating horse, for the gods, which had golden ornaments and yellow-garlands." The same for the first two days and–

**3.** (caused to perform) *Jyoti - Atirātra* by Bhīmasena. Those same first two days and a *Go-Atirātra* they performed for king Ugrasena. The same for the first two days and a *Āyuratirātra* they performed for king Śrutasena. Those are the descendants of Parīkṣit about whom the *Gāthā* sings – "These Yajamānas of the Parīkṣit's family, one after the other, performed *Aśvamedha* sacrifices and righteous as they are with their meritorious deeds, got rid of sinful acts." The same for the first two days and –

**4.** An *Abhijit-Atirātra*, they performed for Para-Āhṇār, the king of *Kosala* and this *Gāthā* has been sung on that – "Para Āhṇār's son, the Kauśalya Para, Hairaṇya-garbha caused a horse fit for sacrifice to be tied (to the *Yūpa*) and gave away the entire regions (to *Ṛtviks* as *Dakṣiṇā*)." The same for the first two days, and–

**5.** With *Viśvajit-Atirātra*, they performed *Daurgraha* (*Aśvamedha* for Purakutsa - Aikṣvāka. That is why it is said by the *Ṛṣi* (in the Ṛgveda) "These, the seven *Ṛṣis*, were there our fathers, when *Daurgraha* (horse) was tied"– The same for the first two days and–

**6.** A *Mahāvrata-Atirātra*, they got performed by Marutta-Āvikṣita, the Ayogava king, in which the Maruts became his body-guards, Agni his Chamberlain and

आविक्षितस्याग्निः क्षत्ता विश्वे देवाः सभासद इति मरुतो ह वै तस्य परिवेष्टारोऽग्निः क्षत्त विश्वे देवाः सभासदो भवन्ति योऽश्वमेधेन यजत एते एव पूर्वे अहनी॥६॥

असोर्यामोऽतिरात्रस्तेन हैतेन क्रैव्य ईजे पाञ्चालो राजा क्रिवय इति ह वै पुरा पञ्चालानाचक्षते तदेतद्गाथयाभिगीतमश्वं मेध्यमालभत क्रिवीणामतिपूरुषः पाञ्चालः परिवक्रायाः सहस्रशतदक्षिणमिति॥७॥

अथ द्वितीयया सहस्रमासन्नयुता शता च पञ्चविंशतिः। दिक्तो दिक्तः पञ्चालानां ब्राह्मणा या विभेजिर इति॥८॥

त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदशं तृतीयमहः सोक्थ्यकमेकविंशः[२] षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति॥९॥

एषोऽनुष्टुप्संपन्नस्तेन हैतेन ध्वसा द्वैतवन ईजे मात्स्यो राजा यत्रैतद्वैतवनं[३] सरस्तदेतद्गाथयाभिगीतं चतुर्दश द्वैतवनो राजा सङ्ग्रामजिद्धयान्। इन्द्राय वृत्रघ्नेऽबध्नात्तस्माद्वैतवनं[४] सर इति॥१०॥

चतुर्विंशाः पवमानास्त्रिवृदभ्यावर्तं चतुश्चत्वारिंशाः पवमाना एकविंशमभ्यावर्तमष्टाचत्वारिंशाः पवमानास्त्रयस्त्रिंशमभ्यावर्तमाग्निष्टोमसामाद्द्वात्रिंशान्युक्थान्येक विंशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिरिति॥११॥

एतद्विष्णोः क्रान्तं तेन हैतेन भरतो दौः षन्तिरीजे[५] तेनेष्ट्वेमां व्यष्टिं व्यानशे येयं भरतानां तदेतद्गाथयाभिगीतमष्टासप्ततिं भरतो दौः[६] षन्तिर्यमुनामनु गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयानिति॥१२॥

२. सोक्थक

३. यत्रैतद्वैत

४. तस्माद्वैत

५. दौःष्य

६. दौःष्य

the Viśvadevas were his assemble members. On this the *Gāthā* is sung– "The Maruts stayed in the house of Marutta; the Chamberlain of *Avikṣata* was Agni and the Viśvedevas were the assembly members for him who performs *Aśvamedha.*" The same for the first two days and–

**7.** An *Aptoryama-Atirātra*, they got performed by Kraivya the *Pāñcāla* king. In those days the *Pāñcālas* used to be called Krivayas. That has been sung by this *Gāthā* – "At *Pauvakra*, the *Pāñcāla* overlord of the Krivas tied (to the *Yūpa*), a horse fit for sacrifice with a hundred thousand (cows) as *Dakṣiṇā.*"

**8.** By a second *Gāthā* (it is said) "A crore of *Paśus* there were which the brāhmins of *Pāñcāla* from every directions, divided among them."

**9.** The *Agniṣṭoma* in *Trivṛt* (nine) *Stoma*, the *Ukthya* in the *Pañcadaśa Stoma*, and for the third day, the *Uktha Stotras* in *Saptadaśa*, the *Ṣoḍaśin Stotra* in the *Eka Viṁśa*, the *Rātri Stotras* in the *Pañcadaśa* and the *Saṅdhi Stotra* in *Trivṛt.*

**10.** Thus the Anuṣṭhubh gets completed. With this *Dhvasa - Dvaitavana*, the king of the *Matsyas* performed the sacrifice and it is on this, the *Gāthā* is sung - "*Dvaitavana*, victorious in battle, tied (to the *Yūpa*) fourteen horses for Indra, the killer of Vṛtra and from that, the lake *Dvaitavana* (got its name)."

**11.** The *Pavamānas* in *Caturviṁśa Stoma*, those repeatedly performed (*Abhyāvarta*) in *Tṛvṛt Stoma*, the *Pavamānas* in *Catuścatvāriṁśa Stoma*, and those repeatedly performed in the *Ekaviṁśa*, the *Pavamānas* in *Aṣtacatvāriṁśa Stoma* and those repeatedly performed in *Trayastriṁśa.* Upto the *Agniṣṭoma Sāmans*, the *Uktha Stotras* in the *Dvātriṁśa*, the *Ṣoḍaśin* in the *Ekaviṁśa*, the *Rātri Stotras* in the *Pañcadaśa* and the *Sandhi* in *Tṛvṛt.*

**12.** This constitutes the striding of Viṣṇu. With this Bharata, the son of Duṣyanta, performed the sacrifice and after performing that, he won that wide authority which belongs to Bharatas to this day. It is on this the *Gāthā* is sung - "Bharata, the son of Duṣyanta tied (to the *Yūpa*) seventy-eight horses for the killer of *Vṛtra* on the banks of the Yamunā and fifty-five on the banks of the Gaṅgā."

अथ द्वितीयया त्रयस्त्रिꣳशꣳ शतꣳ राजाश्वान्बध्वाय मेध्यान्सौद्युम्निरत्यष्टादन्यानमायान्मायवत्तर इति॥१३॥

अथ तृतीयया शकुन्तला नाडपित्यप्सरा भरतं दधे परः सहास्त्रान्निन्द्रायाश्वान्मेध्यान्य आहरद्विजित्य पृथिवीꣳ सर्वामिति॥१४॥

अथ चतुर्थ्या महदद्य भरतस्य न पूर्वे नापरे जनाः। दिवं मर्त्य इव बाहुभ्यां नोदापुः पञ्च मानवा इति॥१५॥

एकविꣳशस्तोमेनर्षभो याज्ञतुर ईजे श्विक्नानाꣳ राजा तदेतद्गाथयाभिगीतं याज्ञतुरे यजमाने ब्रह्माण ऋषभे जनाः। अश्वमेधे धनं लब्ध्वा विभजन्ते स्म दक्षिणा इति॥१६॥

त्रयस्त्रिꣳशस्तोमेन शोणः सात्रासाह ईजे पाञ्चालो राजा तदेतद्गाथयाभिगीतꣳ सात्रासाहे यजमानेऽश्वमेधेन तौर्वशाः। उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि वर्मिणामिति॥१७॥

अथ द्वितीयया षट्षट् षड्वा सहस्राणि यज्ञे लोकपितुस्तव[७] उदीरते त्रयस्त्रिꣳशाः षट् सहस्राणि वर्मिणामिति॥१८॥

अथ तृतीयया सात्रासाहे यजमाने पाञ्चाले राज्ञि सुस्रजि। अमाद्यदिन्द्रः सोमेनातृप्यन् ब्राह्मणा धनैरिति॥१९॥

गोविनतेन शतानीकः सात्राजित ईजे काश्यस्याश्वमादाय ततो हैतदर्वाक्काशयोऽग्निन्नादधत आत्तसोमपीथाः स्म इति वदन्तः॥२०॥

तस्य विधा चतुर्विꣳशाः पवमानास्त्रिवृदभ्यावर्तं चतुश्चत्वारिꣳशाः पवमाना एकविꣳशन्याज्यानि

७. कोक

**13.** By a second *Gāthā*, it is said "Having tied a hundred and thirty-three horses, fit for sacrifice, King Saudyumni, the deceitful overcame his enemies, not so clever."

**14.** By a third (*Gāthā*, which says) - At *Nādapit* (the location of Kaṇva's hermitage), Śakuntalā conceived Bharata, who after conquerring the whole earth, collected for Indra more than a thousand horses, fit for sacrifice.

**15.** By a fourth (*Gāthā* it is said) - "The greatness attained by Bharata was not attained by the kings who preceded him or those who succeeded him, nor even the five descendants of Manu."

**16.** With the *Ekaviṁśa Stoma* (throughout the three days) Ṛṣabha-Yagñatura, the king of the *Śvikas*, performed (this sacrifice), on which this *Gāthā* is sung- "When Ṛsabha-Yagñatura was performing sacrifice, the brahmins receiving wealth as *Dakṣiṇā* were sharing it (among themselves)."

**17.** With the *Trayastriṁśa Stoma* (throughout the three days) Sona-Sātrāsāha, the *Pāñcāla* king performed this sacrifice and it is praised by this *Gāthā* which is sung – "When *Sātrāsāha* performed the *Aśvamedha*, the thirty-three *Stomas* emerged in the form of *Taurvasa* (horses) along with six thousand warriors with armours."

**18.** By a second *Gāthā* ( It is said) – " At the sacrifice of your father, the lord of the earth, (or) O *Ko Ka* at your father's sacrifice, the *Trayastriṁśa Stomas* appear each as six times six thousand horses and six-thousand warriors with armours."

**19.** By a third *Gāthā* (it is said) – "When *Pāñcāla* king Sātrāsāha, well-garlanded, was performing the (*Aśvamedha*) sacrifice, Indra enjoyed with *Soma* and the brahmins with *Dakṣiṇā*.

**20.** Śatānīka-Sātrājita performed the *Govinata* (form of *Aśvamedha*) after capturing the horse of the Kāśya king. From that times the Kāśins do not maintain the sacrificial fires saying "Our *Soma* drink has been taken away from us."

**21.** Its procedure (of *Govinata-Aśvamedha*)–The *Pavamāna Stotras* in *Caturviṁśa Stoma*, those repeatedly perfomred are in *Trivṛt Stomas*, the *Pavamānas* in the

त्रिणवान्युक्थान्येकविꣳशानि पृष्ठानि षट्त्रिꣳशाः पवमानास्त्रयस्त्रिꣳशमभ्यावर्तमाग्निष्टोमसामादेकविꣳशान्युक्थान्येकविꣳशः षोडशी पञ्चदशी रात्रिस्त्रिवृत्सन्धिः॥२१॥

तदेतद्गाथयाभिगीतꣳ शतानीकः समन्तासु मेध्यꣳ सात्राजितो हयम्। आदत्त यज्ञङ्का शीनां भरतः सत्वतामिवेति॥२२॥

अथ द्वितीयया श्वेतꣳ समन्तासु वशं चरन्तꣳशतानीको धृतराष्ट्रस्य मेध्यम्। आदाय सद्वा[८] दशमास्यमश्वꣳ शतानीको गोविनतेन हेज इति॥२३॥

अथ चतुर्थ्यामिहदद्य भरतानां न पूर्वे नापरे जनाः। दिवं मर्त्य इव पक्षाभ्यां नोदापुः सप्त मानवा इति ॥२४॥

अथातो दक्षिणानां मध्यं प्रति राष्ट्रस्य यदन्यद्भूमेश्च पुरुषेभ्यश्च ब्राह्मणस्य च वित्तात्प्राची दिग्धोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृका अन्वाभक्ताः ॥२५॥

उदनीयायाꣳ सꣳस्थितायामेकविꣳशतिं वशा अनूबन्ध्या अलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या एतासां देवतानामाप्त्यै तद्यद्बार्हस्पत्या अन्या[९] भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठत्यथ यदेकविꣳशतिर्भवत्येकविꣳशो[१०] वा एष य एष तपति द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतामभिसंपदम्॥२६॥

उदवसानीयायाꣳ सꣳस्थितायां चतस्रश्च जायाः कुमारीं पञ्चमीं चत्वारि च शतान्यनुचरीणां यथासमुदितं दक्षिणां ददात्यथोत्तरꣳ संवत्सरमृतुपशुभिर्जयते[११] षड्भिराग्नेयैर्वसन्ते षड्भिरैन्द्रैर्ग्रीष्मे षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु षड्भिर्मैत्रावरुणैः शरदि षड्भिरैन्द्रावैष्णवैर्हेमन्ते षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे षड्ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रतितिष्ठति षट्त्रिꣳशदेने

८. सह्वा
९. अन्त्या
१०. भवन्ति
११. यजते

*Catuscatvāriṁśa*, the *Ājya Stotras* in the *Ekaviṁśa*; the *Ukthas* in *Triṇava*, the *Pṛṣṭhas* in the *Ekaviṁśa*, the *Pavamānas* in *Ṣattriṁśa Stomas* and those repeatedly performed in *Trayastriṁśa* upto the *Agniṣṭoma Sāman*, the *Ukthās* in the *Ekaviṁśa*, the *Ṣoḍaśins* in the *Ekaviṁśa* and the *Rātri Stotras* in the *Pañcadaśa* and the *Sandhi Stotra* in the *Trivṛt*.

**22.** That has been sung in the form of this Gāthā–"Śatānīka Sātrājita tied a horse (to the *Yūpa*) in the neighbourhood in the sacrifice of the Kāśina, just as Bharata tied that of the *Satvatas*."

**23.** By a second *Gāthā*, (It is sung)– "The valorous Śatānīka captured in the neighbourhood the white sacrificial horse of Dhṛtarāṣṭra, which was wandering about at its pleasure, in the tenth month and performed the *Govinata* sacrifice."

**24.** By the fourth (*Gāthā*) it is said– "There was none before or after as great as the Bharatas; not even in all the seven (generations) of men. Even as an ordinary man cannot touch the sky with his hands."

**25.** Now about the *Dakṣiṇās*– Whatever there is in the middle of the kingdom, barring the lands, men and wealth of the brahmins, of that, the eastern region goes to the Hotā; the southern regions to the Brahmā; the western region to the Adhvaryu and the northern region to the Udgātā. The other *Ṛtviks* share these along with them.

**26.** When the *Udayanīya* (completing offering) is made, he immolates twenty-one barron cows to Mitrā-Varuṇa, the Viśvedevas and Bṛhaspati, in order to gain those deities. And why those to Bṛhaspati come last; is because Bṛhaspati is Brahman and he thus establishes himself finally in Brahman. And as to why it is twenty-one is because this yonder one who burns (Sun) is twenty-one-fold there are twelve months, five seasons, these three worlds and the yonder sun is twenty-first. This he thereby obtains.

**27.** When the *Udayanīya* (completing offering) is made, they offer as *Dakṣiṇā*, four women with a maiden as the fifth, and four-hundred female attendants as per agreement. During the following year he succeeds (to perform sacrifice) with seasonal *Paśus* (being offered). Six to Agni in the spring, six to Indra in the summer, six to Parjanya or the Maruts in the rainy season,

पशवो भवन्ति षट्त्रिंꣳशदक्षरा बृहती बृहत्यामधि स्वर्गो लोकः प्रतिष्ठितस्तद्वन्ततो बृहत्येव छन्दसा स्वर्गे लोके प्रतितिष्ठति॥ २७॥इति चतुर्थं ब्राह्मणम्॥

॥ इति पञ्चमोऽध्यायः ॥

six to Mitrā-Varuṇas in the autumn, six to Indra and Viṣṇu in the winter and six to Indra and Bṛhaspati in the dewy season. Six are the seasons for a year. He thus gets established in the seasons, in the year. These amount to thirty-six *Paśus*. The Bṛhatī metre has thirty-six syllables and heavenly world is established on the Bṛhatī. Thus he finally gets established by means of the Bṛhatī metre, in the heavenly world. (Fourth Brāhmaṇa Ends.)

**(Chapter Five Ends.)**

# षष्ठोऽध्यायः

## प्रथमं ब्राह्मणम्

पुरुषो ह नारायणोऽकामयतातितिष्ठेयꣳ सर्वाणि भूतान्यहमेवेदꣳ सर्वꣳ स्यामिति स एतं पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्तमाहरत्तेनायजत तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदति तिष्ठति सर्वाणि भूतानीदꣳ सर्वं भवति य एवं विद्वान्पुरुषमेधेन यजते योवैतदेवं वेद॥१॥

तस्य त्रयोविꣳशतिर्दीक्षा द्वादशोपसदः पञ्च सुत्या स एष चत्वारिꣳशद्रात्रः सदीक्षोपसत्कश्चत्वारिꣳशदक्षरा विराट्तद्विराजमभिसंपद्यते तवो विराडजायत विराजो अधि पूरुष इत्येषा वै सा विराडेतस्या एवैतद्विराजो यज्ञं पुरुषं जनयति॥२॥

ता वा एताश्चतस्रो दशतो भवन्ति तद्यदेवाश्चतस्रो दशतो भवन्त्येषां चैवलोकानामासयै दिशां चेममेव लोकं प्रथमया दशताप्नुवन्नन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्या तथैवैतद्यजमान इममेव लोकं प्रथमया दशताप्रोत्यन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्येतावद्वा इदꣳ सर्वं यावदिमे च लोका दिशश्च सर्वं पुरुषमेधः सर्वस्यासयै सर्वस्यावरुद्ध्यै॥३॥

एकादशाग्निषोमीयाः पशव उपवसथे तेषां समानं कर्मैकादश यूपा एकादशाक्षरा त्रिष्टुब् वज्रस्त्रिष्टुब् वीर्यं त्रिष्टुब् वज्रेणैवैतद्वीर्येण यजमानः पुरस्तात्पाप्मानमपहत एकादशिनाः सुत्यासु पशवो भवन्त्येकादशाक्षरा त्रिष्टुब् वज्रस्त्रिष्टुब् वीर्यं त्रिष्टुब् वज्रेणैवैतद्वीर्येण यजमानः पुरस्तापाप्मानमपहते॥४॥

यद्वेवैकादशिना भवन्त्येकादशिनी वा इदꣳ सर्वं प्रजापतिर्ह्येकादशिनी सर्वꣳ हि प्रजापतिः सर्वं पुरुषमेधः सर्वस्यासयै सर्वस्यावरुद्ध्यै॥५॥

## Chapter Six

### BRĀHMAṆA I

**1.** Puruṣa Nārāyaṇa desired- "let me become above all beings. Let me become all these." He discovered this *Puruṣamedha* sacrifice of five nights. He planned it and performed it. Having performed it, he became above every other being and became all these. He who knows thus and performs the *Puruṣamedha* becomes above all beings and become all these.

**2.** For that, there are twenty-three *Dīkṣās* or initiation ceremonies; twelve *Upasads*; five *Sutyas* (*Soma* sacrifices). Thus with *Dīkṣās* and *Upasads*, it becomes a forty days performance and Virāj metre (in four *Pādas*) has forty syllables. Thus he gains the Virāj. From that came the Virāj and from the Virāj, the *Yagñā-Puruṣa* is produced.

**3.** These forty days split into four tens and these four tens are for the attainment of the worlds and the quarters. From the first set of ten days, he attained this terrestrial world; from the second, the aerial region; from the third, the heavenly world; from the fourth quarters. In the same manner, this Yajamāna gains this terrestrial world from the first set of ten, the aerial region from the second, the heavenly world from the third and the quarters from the fourth. This universe is that much as these three worlds and the quarters. *Puruṣamedha* is everything and it is for attainment of and owning of everything.

**4.** On the *Upavasatha* day, there are eleven *Paśus* for *Agni-Soma* and the procedure of these is the same. There are elevan *Yūpas.* The Tṛṣṭhubh metre consist of eleven syllables and Tṛṣṭhubh, is a thunder-bolt, vitality. By means of Tṛṣṭhubh, the thunder-bolt, vitality, the Yajamāna dispels all evil at the start. There are eleven *Paśus* in the *Sutyas.* Tṛṣṭhubh has eleven syllables and Tṛṣṭhubh is a thunder-bolt and it is vitality. By means of Tṛṣṭhubh, the thunder-bolt, vitality, the Yajamāna dispels all evil at the start.

**5.** Why there are eleven *Yūpas* is because a set of eleven *Yūpas* is everything and it is for securing and owning everything. Prajāpati is everything and the *Puruṣamedha* is everything.

स वा एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति पांक्तो यज्ञः पांक्तः पशुः पञ्चर्त्तवः संवत्सरो यत्किञ्च पञ्चविधमधिदेवतमध्यात्मं तदेनेन सर्वमाप्नोति॥६॥

तस्याग्निष्टोमः प्रथममहर्भवत्यथोक्थ्योऽथातिरात्रोऽथोक्थ्योऽथाग्निष्टोमः स वा एष उभयतोज्योत्तिरुभयत उक्थ्यो यवमध्यः पञ्चरात्रो भवतीमे वै लोकाः पुरुषमेध उभयतोज्योतिषो वा इमे लोका अग्निनेत आदित्येनामुतस्तस्मादुभयतोज्योतिरन्नमुक्थ्य आत्मातिरात्रस्तद्यदेता उक्थ्यावतिरात्रमभितो भवतस्तस्मादयमात्मान्नेन परिवृढोऽथ यदेष वर्षिष्ठोऽतिरात्रोऽह्नः स मध्ये तस्माद्यवमध्यो युते ह वै द्विषन्तं भ्रातृव्यमयमेवास्ति नास्य द्विषन् भ्रातृव्य इत्याहुर्य एवं वेद॥७॥

तस्यायमेव लोकः प्रथममहरयमस्य लोको वसन्त ऋतुर्यदूर्ध्वमस्माल्लोकादर्वाचीन-मन्तरिक्षात्तद्द्वितीयमहस्तद्वस्य ग्रीष्म ऋतुरन्तरिक्षमेवास्य मध्यममहरन्तरिक्षमस्य वर्षाशरदावृतू यदूर्ध्वमन्तरिक्षादर्वाचीनं दिवस्तच्चतुर्थ शिहस्तद्वस्य[1] हेमन्त ऋतुर्द्यौरेवास्य पञ्चममहर्द्यौरस्य शिर[2] ऋतुरित्यधिदेवतम्॥८॥

अथाध्यात्मं प्रतिष्ठैवास्य प्रथममहः प्रतिष्ठो अस्य वसन्तऋतुर्यदूर्ध्वं प्रतिष्ठाया अवाचीनं मध्यात्तद्द्वितीयमहस्तद्वस्य ग्रीष्म ऋतुर्मध्यमेवास्य मध्यममहर्मध्यमस्य वर्षाशरदावृतू यदूर्ध्वं मध्यादवाचीनꣳ शीर्ष्णस्तच्चतुर्थमहस्तद्वस्य हेमन्त ऋतुः शिर एवास्य पञ्चममहः शिरोऽस्य शिशिर ऋतुरेवमिमे च लोकाः संवत्सरश्चात्मा च पुरुषमेधमभिसंपद्यन्ते सर्वं वा इमे लोकाः सर्वꣳसंवत्सरः सर्वमात्मा सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै॥९॥ इति प्रथमं ब्राह्मणम्॥

१. मह
२. शिशिर

**6.** Now this *Puruṣamedha* is a *Yajña-Kratu* lasting for five days. The sacrifice is five-fold and the *Paśu* is five-fold and a year has five seasons. Whatever there is five-fold concerning the deity or the body, he obtains thereby.

**7.** The first day (of the five) happens to be the *Agniṣṭoma*, then an *Ukthya*, then an *Atirātra*, then an *Ukthya* and then an *Agniṣṭoma*. This sacrifice has got both ends *Jyoti* (the two *Agniṣṭomas* at the first and last days are *Jyotiṣṭoma* variety of *Agniṣṭoma*) and *Ukthyas* on both sides (with *Atirātra* in the middle, i.e., the third day). It is a *Pañcarātra* (five day's sacrifice) like the middle of a corn (the largest performance, i.e., *Atirātra* being in the middle). For, this *Puruṣamedha* is these worlds. These worlds have *Jyoti* (effulgence) on both sides. This world has Agni (as *Jyoti*) and the yonder world has Sun (as *Jyoti*). The two *Ukthyas* are food which are on either sides of the *Atirātra* and hence this self is covered by food. The *Atirātra* which is the largest of them is in the middle of the five days and hence it is like the middle part of a corn and (gives a shape of *Yava* to this sacrifice). Whosoever knows this, repels (You) his hateful enemy. They say of him - "he alone is alive and not his hateful enemy."

**8.** For that (*Puruṣamedha*), the first day is his terrestrial world and the spring season also is this terrestrial world. The second day is what is above this terrestrial world and below the aerial region. It is his summer season. The aerial region is the middle (third) day. That is his rainy and autumnal seasons. That which is above the aerial region and below the sky is the fourth day. It is its winter season. Its fifth day is the sky and it is his dewy seasons. This is the divine aspect of it.

**9.** Now about the physical aspect- the first day is its feet and its feet are the spring season. That which is above the feet and below the middle is the second day and it is its summer season. The middle part of (its body) is the middle day and the middle of it is the rainy and autumnal seasons. That which is above the middle and below the head is the fourth day and that is his winter. His head itself is the fifth day and his head is the dewy season. Thus these worlds, the year and the body converge in the *Puruṣamedha*. These worlds are everything; the year is everything and the self is everything and the *Puruṣamedha* is everything. Thus (one performs *Puruṣamedha* for the attainment of all for owning everything. (First Brāhmaṇa Ends.)

## द्वितीयं ब्राह्मणम्

अथ यदस्मात्पुरुषमेधो नामेमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषस्तस्य यदेषु लोकेष्वन्नं तदस्यान्नं मेधस्तद्यदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन्मेध्यान्पुरुषानालभते तस्मादेव पुरुषमेधः॥१॥

तान्वै मध्यमेऽहन्नालभतेऽन्तरिक्षं वै मध्यममहरन्तरिक्षमु वै सर्वेषां भूतानामायतनमथो अन्नं वा एते पशव उदरं मध्यममहरुदरे तदन्नं दधाति॥२॥

तान्वै दशदशालभते दशाक्षरा विराड्विराडु कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्या एकादश दशत आलभत एकादशाक्षरा त्रिष्टुब् वज्रस्त्रिष्टुब् वीर्यं त्रिष्टुब् वज्रेणैवैतद्वीर्येण यजमानो मध्यतः पाप्मानमपहतेऽष्टाचत्वारिꣳशतं मध्यमे यूप आलभतेऽष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनवरुन्ध एकादशैकादशेतरेष्वेकादशाक्षरा त्रिष्टुब् वज्रस्त्रिष्टुब् वीर्यं त्रिष्टुब् वज्रेणैवैतद्वीर्येण यजमानोऽभितः पाप्मानमपहतेऽष्टा उत्तमानालभतेऽष्टाक्षरा गायत्री ब्रह्म गायत्री तद्ब्रह्मैवैतदस्य सर्वस्योत्तमं दधाति[1] तस्माद्ब्रह्मास्य सर्वस्योत्तममित्याहुः॥३॥

ते वै प्राजापत्या भवन्ति ब्रह्म वै प्रजापतिर्ब्राह्मो हि प्रजापतिस्तस्मात्प्राजापत्या भवन्ति॥४॥

स वै पशूनुपाकरिष्यन्नेतास्तिस्रः सावित्रीराहुतीर्जुहोति देव सवितस्तत्सवितुर्वरेण्यं विश्वानि देव सवितरिति सवितारं प्रीणाति सोऽस्मै प्रीत एतान्पुरुषान् प्रसौति तेन प्रसूतानालभते॥५॥

ब्रह्मणे ब्राह्मणमालभते ब्रह्म वै ब्राह्मणो ब्रह्मैव तद्ब्रह्मणा समर्धयति क्षत्राय राजन्यं क्षत्रं वै राजन्यः क्षत्रमेव तत्क्षत्रेण समर्धयति मरुद्भ्यो वैश्यं विशो वै मरुतो विशमेव तद्विशा समर्धयति तपसे शूद्रं

१. करोति

## BRĀHMAṆA II

**1.** Now, why it is called *Puruṣamedha* - these worlds are doubtless, the fortress and this one who blows (Vāyu) is the Puruṣa. He is lying (*Śī*) in this fort (*Pur*); hence he is the Puruṣa. Whatever food there is in these worlds that is his *Medha* or food. Therefore it is named *Puruṣamedha*. Moreover in this, sacrificially pure Puruṣas are (symbolically) immolated and hence too it is *Puruṣamedha*.

**2.** He immolates them on the middle day. The middle day is indeed the aerial region and the aerial region is the abode of all beings. Indeed these *Paśus* are also food and the middle day is the belly and thereby he puts food into the belly.

**3.** He immolates them in sets of ten-ten; for the Virāḍ metre has ten syllables and Virāḍ means all food and hence for owning all food (he immolates in groups of ten). Eleven rounds in tens he immolates; for the Tṛṣṭhubh has eleven syllables. Tṛṣṭhubh is the thunder-bolt, and his vitality. By means of the Tṛṣṭhubh, the thunderbolt, vitality the Yajamāna removes evil from the middle. He ties forty-eight to the middle *Yūpa*, for the Jagatī metre consists of forty-eight syllables and the *Paśus* are *Jāgata* (of moving nature). By means of the Jagatī, he thus secures cattle for him (Yajamāna). To the other *Yūpas*, he ties sets of eleven-eleven *Paśus*. The Tṛṣṭhubh metre has eleven syllables. The Tṛṣṭhubh is the thunder-bolt, and vitality. By means of Tṛṣṭhubh, the thunderbolt, the vitality, the Yajamāna dispels evil from all around. Lastly he ties (to the *Yūpa*) eight *Paśus* and the Gāyatrī has eight syllables. Gāyatrī is the Brahman. He thus makes the Brahman the greatest (ultimate) principle of this universe. So they say that the Brahman is the super-most in universe.

**4.** Those *Paśus* are for Prajāpati; for Prajāpati is Brahman and Prajāpati is of the nature of the Brahman. Therefore they belong to Prajāpati.

**5.** While about to lead the *Paśus*, he offers those three oblations to Savita (starting) "O god Savita; impel.... etc.," and "*Tatsavitur*......etc.," and "*Viśvāni deva*.....etc." and he (Savita) thus pleased, hastens those men. He ties those thus prompted by him.

**6.** For the priestly class, he binds a Brahmin; for, Brahmin is indeed the priesthood. So he enriches the priestly class by mean of a Brahmin. For the

तपो वै शूद्रस्तप एव तत्तपसा समर्धयत्येवमेता देवता यथारूपं पशुभिः समर्धयति ता एनꣳ समृद्धाः समर्धयन्ति सर्वैः कामैः॥६॥

आज्येन जुहोति तेजो वा आज्यं तेजसैवास्मिꣳस्तत्तेजो दधात्याज्येन जुहोत्येतद्वै देवानां प्रियं धाम यदाज्यं प्रियेणैवैनान्धाम्ना समर्धयन्ति त एनꣳ समृद्धाः समर्धयन्ति सर्वैः कामैः॥७॥

नियुक्तान्पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येते षोडशर्चेन षोडशकलं वा इदꣳ सर्वꣳ सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुध्या इत्थमसीत्थमसीत्युपरत्तौत्येवैनमेतन्महयत्येवाथो यथैव तथैनमेतदह तत्पर्यग्निकृताः पशवो बभूवुरसंज्ञप्ता अथ हैनं वागभ्युवाद पुरुष मा सन्तिष्ठिपो यदि सꣳस्थापयिष्यसि पुरुष एव पुरुषमत्स्यतीति तान्पर्यग्निकृतानेवोदसृजत्तद्देवत्या आहुतीर जुहोत्ताभिस्ता देवता अप्रीणात्ता एवं प्रीता अप्रीणन्त्सर्वैः कामैः॥८॥

आज्येन जहोति तेजो वा आज्यं तेजसैवास्मिꣳस्तत्तेजो दधात्यैकादशिनैः सꣳस्थापयत्येकादशाक्षरा त्रिष्टुब् वज्रस्त्रिष्टुब् वीर्यं त्रिष्टुब् वजेणैवैतद्वीर्येण यजमानो()पाप्मानमपहते॥९॥

उदयनीयायाꣳ स ꣳ स्थितायामेकादश वशा अनूबन्ध्या आलभते मैत्रावरुणीर्वैश्वदेवीर्बार्हस्पत्या एतासां देवतानामाप्त्यै तद्यद्बार्हस्पत्या अन्त्या भवन्ति ब्रह्म वै बृहस्पतिस्तदु ब्रह्मण्येवान्ततः प्रतितिष्ठत्यथ यदेकादश भवन्त्यैकादशाक्षरा त्रिष्टुब् वज्रस्त्रिष्टुब् वीर्यं त्रिष्टुब् वज्रेणैवैतद्वीर्येण यजमानो मध्यतः[२] पाप्मानमपहते त्रैधातव्युदवसानीयासावेव बन्धुः॥१०॥

(). मध्यतः

*Kṣatra* class, he ties a *Rājanya* (prince); for, *Rājanya* indeed is of the *Kṣatra* class. Thus by means of a *Kṣatra* he enriches the *Kṣatra* class. He binds a *Vaiśya* (merchant) for the Maruts, because Maruts are the *Viś*. Thus he enriches the merchant class by means of a *Viś*. He binds a *Śūdra* for the *Tapas* (religious austerity); for, the *Śūdra* is toil. He thus joins toil with physical efforts. According to the particular forms of these divinities, he provides the *Paśus*. Thus provided, they supply him with all his objects of desire.

**7.** He offering with *ghee*, for *Ājya* is effulgence. Thus by means of effulgence, he endows effulgence unto him. Moreover he makes offerings with *ghee* because *ghee* is the favourites abode of the gods. So he enriches them with their own favourite abode. They thus gratified, bless him with all his desired objects.

**8.** Brahmā from the right side, praises the men so bound (to the *Yūpas*) by means of the Puruṣa Nārāyaṇa hymns (starting with) "Puruṣa the thousand-headed.....etc." This set of hymns has sixteen verses. He does so for the obtainment and the owning of everything, for everything has sixteen *Kalās* (parts) and the *Puruṣamedha* is everything. By praising "You are so and so; you are so and so", he indeed honours him (magnifies him). At the same time he speaks of him as he is. Now the fire is carried round the *Paśus* but they are not slaughtered (as in the case of other *Paśus*). Then a (super-natural) voice told him- "You, Puruṣa, you shall not kill these men. If you do so, men will eat men." Therefore, after the fire is taken round them, they (the human *Paśus*) were let off and *ghee* oblations were offered to the same divinities. Thus he gratifies those divinities and they so pleased, grant him all objects of desire.

**9.** He makes offering with *ghee* and *ghee* is effulgence. By means of the effulgent, he puts effulgence into it. He concludes with those of the eleven *Yūpas*. The Tṛṣṭhubh has eleven syllables and the Tṛṣṭhubh is a thunder-bolt and vitality. With Tṛṣṭhubh, the thunder-bolt, vitality, the Yajamāna wards off evil from the middle part.

**10.** After the *Udayanīya* (concluding oblations) are offered, he seizes eleven barren cows for Mitrā-Varuṇa, Viśvedevas and Bṛhaspati, for the obtainment of these deities. Those of Bṛhaspati are the last; for Bṛhaspati is Brahman and thus he finally gets established in Brahman. Now, why there are eleven barren cows is because the Tṛṣṭhubh is eleven-syllabled and Tṛṣṭhubh is the thunder-bolt and vitality. So by means of the thunder-bolt, vitality, the Yajamāna dispels evil from the middle. The last offering is *Traidhāvatī* and its significance is the same as before.

अथातो दक्षिणानां मध्यं प्रति राष्ट्रस्य यदन्यद्भूमेश्च ब्राह्मणस्य च वित्तात्स पुरुषं प्राची दिग्धोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुस्तदेव होतृका अन्वा भक्ताः॥११॥

अथ यदि ब्राह्मणो यजेत सर्ववेदसं दद्यात्सर्वं वै ब्राह्मणः सर्वः सर्ववेदसः सर्वं पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै॥१२॥

अथात्मन्नग्नी समारोह्योत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्तदेव मनुष्येभ्यस्तिरो भवति यद्युग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपरस्थाय गृहेषु प्रत्यवत्स्येदथ[3] तान्यज्ञक्रतूनाहरेत यानभ्याप्नुयात्स वा एष न सर्वस्मा अनुवक्तव्यः सर्वः हि पुरुषमेधो नेत्सर्वस्मा इव सर्वं ब्रवाणीति योन्वेव ज्ञातस्तस्मै ब्रूयादथ योऽनूचानोऽथ योऽस्य प्रियः स्यान्नेत्वेन सर्वस्मा इव॥१३॥ इति द्वितीयं ब्राह्मणम्॥

॥ इति षष्ठोऽध्यायः ॥

२. यजमानोऽन्ततः
३. प्रत्यवस्येदथ

**11.** Now about the *Dakṣiṇās* - the middle of the country barring the land and wealth of brahmins, including the men, the eastern portion the roof is the Dakṣiṇā for the Hotā. The southern portion is to the Brahmā; the western part to the Adhvaryu and the northern portion to the Udgātā. The other *Ṛtviks* share the same with them.

**12.** If a Brahmin performs this sacrifice, he should give (as *Dakṣiṇā*) his property; for Brahmin is everything and all property is everything. *Puruṣamedha* is also everything and so for attaining everything and owning everything (he should give away all his property).

**13.** He should transfer the two fires into himself and stand in prayer of the Sun while chanting *Uttara Nārāyaṇa* hymns and proceed to the forest without looking back. That place happens to be away from the human beings. If he wishes to live in a village, let him transfer the two fires on to the two *Araṇīs* and after standing in prayer of the Sun while chanting the *Uttara Nārāyaṇa,* he may stay at his home. Let him continue performing such sacrifices as he can afford. The technique of this sacrifice should not be imparted to everyone, lest it should amount to a free for all. Because the *Puruṣamedha* is everything and it can be imparted only to a known person like one well-versed in Vedic lore are one very dear to oneself but not to anybody and everybody. (Second Brāhmaṇa Ends.)

**(Chapter Six Ends.)**

# सप्तमोऽध्यायः

## प्रथमं ब्राह्मणम्

ब्रह्म वै स्वयम्भु तपोऽतप्यत तदैक्षत न वै तपस्यानन्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनीति तत्सर्वेषु भूतेष्वात्मानꣳ हुत्वा भूतानि चात्मनि सर्वेषां भूतानाꣳ श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यं पर्यैत्तथैवैतद्यजमानः सर्वमेधे सर्वान् मेद्यान्हुत्वा[1] सर्वेषां[2] भूतानां श्रैष्ठ्यꣳ स्वाराज्यमाधिपत्यं पर्येति॥१॥

स वा एष सर्वमेधो दशरात्रो यज्ञक्रतुर्भवति दशाक्षरा विराड्विराड्कृत्स्नमन्नं कृत्स्नस्यैवान्नाद्यस्यावरुद्ध्यै तस्मिन्नग्निं परार्ध्यं चिनोति परमो वा एष यज्ञक्रतूनां यत्सर्वमेधः परमेणैवैनं परमतां गमयति॥२॥

तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवत्यग्निर्वा अग्निष्टुदग्निष्टोमोऽग्निमुखा उ वै सर्वे देवाः सर्वेषां देवानामासयै तस्याग्नेया ग्रहा भवन्त्याग्नेय्यः पुरोरुचः सर्वमाग्नेयमसदिति॥३॥

इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवतीन्द्रो वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्येन्द्रा ग्रहा भवन्त्यैन्द्रयः पुरोरुचः सर्वमैन्द्रमसदिति॥४॥

सूर्यस्तुदुक्थ्यस्तृतीयमहर्भवति सूर्यो वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्य सौर्या ग्रहा भवन्ति सौर्यः पुरोरुचः सर्वꣳ सौर्यमसदिति॥५॥

वैश्वदेवश्चतुर्थमहर्भवति विश्वे वै सर्वे देवाः सर्वेषां देवानामाप्त्यै तस्य वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुचः सर्वं वैश्वदेवमसदिति॥६॥

१. मेध्यान्

२. सर्वाणि भूतानि

## Chapter Seven

### BRĀHMAṆA I

**1.** Brahman, the self-born, underwent *Tapas* (austerities). He discovered "There is no eternality in *Tapas.* So I will offer mine own self in the beings and the beings into myself." Then by offering his own self into all beings and all the beings in his self, he attained supermacy, the sovereignity, and overlordship over all creatures. In the same way this Yajamāna, by offering all essence in the *Sarvamedha* sacrifice, attains supremacy, sovereignity and overlordship over all beings.

**2.** This *Sarvamedha* is a sacrificial performance extending over ten days. The Virāḍ metre has ten syllables and Virāḍ is all food and so it is for owning all food (he performs it). He builds up the largest altar in that (sacrifice). This *Sarvamedha* is the super-most among the *Yajña-kratus* (sacrificial performances). Thus he attains supermacy by means of the super-most.

**3.** For that, the first day is of *Agnistut-Agniṣṭoma* and *Agnistut-Agniṣṭoma* is indeed fire (itself). All gods have fire as their mouth and so, for gaining all the gods (he performs the *Agnistut*); for that the *Soma-Grahās* are for Agni; the *Puroruk* chant are related to Agni, because he thinks, "Let all about it be related to Agni."

**4.** The second day is of *Indrastut-Ukthya.* Indra is indeed all the gods and for the gaining of all the gods (he performs the *Indrastut*). For that the *Soma-Grahās* are of Indra, the *Puroruk* chants are also on Indra, so that all about it is connected with Indra.

**5.** The third-day is of *Sūryastut-Ukthya,* because the Sun is indeed all the gods and it is for gaining all the gods. For it, the *Soma-Grahās* are of Sūrya; the *Puroruk* chants are on Sūrya; so that all about it is connected to Sūrya.

**6.** The fourth day is a Vaiśvadeva; for Viśvedevas mean all the gods and for the gaining of all the gods (it is performed). For that the *Soma-Grahās* are of Viśvedevas and the *Puroruk* chants are on Viśvedevas; so that all about it is connected to Viśvedevas.

आश्वमेधिकं मध्यमं पञ्चममहर्भवति तस्मिन्नश्वं मेध्यमालभतेऽश्वमेधस्यैवाप्त्यै॥७॥

पौरुषमेधिकं मध्यमꣳ षष्ठमहर्भवति तस्मिन्मेध्यान्पुरुषानालभते पुरुषमेधस्यैवाप्त्यै॥८॥

अप्तोर्यामः सप्तममहर्भवति सर्वेषां यज्ञक्रतूनामाप्त्यै तस्मिन्त्सर्वान्मेध्यानालभते यच्च प्राणि यच्चाप्राणं वपा वपावतां जुहोति त्वच उत्कर्तमवपाकानाꣳ संव्रश्चमोषधि वनस्पतीनां प्रकिरन्ति शुष्काणां चा द्र्राणां चान्नमन्नं जुहोत्यन्नस्यान्नस्याप्त्यै सर्वं जुहोति सर्वस्मै जुहोति सर्वस्याप्त्यै सर्वस्यावरुद्धये प्रातः सवने हुतासु वपास्वेवमेव तृतीयसवने हुतेष हविःषु॥९॥

त्रिणवमष्टममहर्भवति वज्रो वै त्रिणवो वज्रेण खलु वै क्षत्रꣳ स्पृतं तद्वज्रेणैव क्षत्रꣳ स्पृणोति॥१०॥

त्रयस्त्रिꣳ शं नवममहर्भवति प्रतिष्ठा वै त्रयस्त्रिꣳशः प्रतिष्ठित्यै॥११॥

विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति सर्वं वै विश्वजित्सर्वपृष्ठोऽतिरात्रः सर्वꣳ सर्वमेधः सर्वस्याप्त्यै सर्वस्यावरुद्ध्यै॥१२॥

अथातो दक्षिणानां मध्यं प्रति राष्ट्रस्य यदन्यद्ब्राह्मणस्य वित्तात्सभूमि सपुरुषं प्राची दिग्धोतुर्दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः तदेव होतृका अन्वाभक्ताः॥१३॥

तेन हैतेन विश्वकर्मा भौवन ईजे तेनेष्ट्वात्यतिष्ठत्सर्वाणि भूतानीदꣳ सर्वमभवदतितिष्ठति सर्वाणि भूतानीदꣳ सर्वं भवति य एवं विद्वान्त्सर्वमेधेन यजते यो वैतदेवं वेद॥१४॥

**7.** The fifth day is a central *Aśvamedhika* (*Ukthya*) sacrifice. At this, a horse fit for sacrifice is immolated, to gain the (fruit of) *Aśvamedha*.

**8.** The sixth day is a central *Puruṣamedha* (an *Atirātra* sacrifice). For that, men fit for sacrifice are tied (to the *Yūpa*) to obtain (the fruit of *Puruṣamedha*).

**9.** The seventh day is an *Aptoryāma*; for the sake of his gaining all kinds of *Soma* sacrifices and for that all *Paśus*, fit for sacrifice are immolated, both animate and inanimate. He offers the *Vapā* of those having *Vapā* and of those without *Vapā*, they throw pieces cut out of the skin; of the herbs and trees, they throw after cutting. He offers every kind of food of both dry and wet, in order to gain every kind of food. He offers everything, offers to every one, in order to gain and own everything. Just as the offering of the *Vapās* is made in the morning *savana*, in the same way, the oblations are offered in the third *savana*.

**10.** The eighth day is *Triṇava-Stoma* day; for the *Triṇava-Stoma* is a thunderbolt and by means of the thunderbolt, indeed, *Kṣatra* (royal authority) is gained. Thus by means of thunderbolt he gains royal authority.

**11.** The ninth day is a *Trayastriṁśa-Stoma* day, for the sake of gaining a foothold; for the *Trayastriṁśa-Stoma* is a foothold.

**12.** The tenth day is a *Viśvajit-Atirātra* day with all the *Pṛṣṭhas*; for the sake of gaining and owning everything. Because, the *Viśvajit-Atirātra* with all the *Pṛṣṭhas* is everything and the *Sarvamedha* is everything.

**13.** Now about the *Dakṣiṇās* - whatever there is on the middle of the kingdom other than the property of the brahmins, but including land and men, of that, those in the eastern region are to the Hotā; those in the southern side go to the Brahmā; the western to the Adhvaryu; and the northern to the Udgātā and the other *Ṛtviks* share these along with them.

**14.** Viśvakarma-Bhauvana, once performed this (*Sarvamedha*) sacrifice and having performed it, he surpassed all beings and became everything here. He who knows thus and performs the *Sarvamedha* or he who even knows this, surpasses all beings and becomes everything here.

त ꣳ ह कश्यपो याजयाञ्चकार तदपि भूमिः श्लोकं जगौ न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन् भौवन मन्द आसिथ। उपमङ्क्ष्यति स्या सलिलस्य मध्ये मृषैष ते सङ्गरः कश्यपायेति॥१५॥ इति प्रथमं ब्राह्मणम्॥

॥ इति सप्तमोऽध्यायः ॥

**15.** It was Kaśyapa who officiated for him. In that the earth sung the *śloka* (euology). "No mortal shall give me away; you were foolish, O Viśvakarma-Bhauvaṇa. This I (the earth) will sink into the midst of water and your promise (to give) to Kaśyapa is going to be a false." (First Brāhmaṇa Ends.)

**(Chapter Seven Ends.)**

# अष्टमोऽध्यायः

## प्रथमं ब्राह्मणम्

अथास्मै श्मशानं[1] कुर्वन्ति गृहान्वा प्रज्ञानां वा यो वै कश्च म्रियते स शवस्तस्मा एतदन्नं करोति तस्माच्चवान्नꣳ शवान्नꣳ ह वै तच्छमशानमित्या चक्षते परोऽक्षꣳ श्मशा उ हैव नाम पितृणामत्तारस्ते हामुष्मिंल्लोकेऽकृतश्मशानस्य साधुकृत्यामुपदंभयन्ति तेभ्य एतदन्नं करोति तस्माच्छमशान्नꣳ श्मशान्नꣳ ह वै तच्छमशानमित्या चक्षते परोऽक्षम्॥१॥

तद्वै न क्षिप्रं कुर्यान्नेन्नवमघङ्करवाणीति[2] चिर एव कुर्यादघमेव[3] तत्तिरः करोति यत्र समा नानु चन स्मरेयुरश्रुतिमेव तदघं[4] गमयति यद्यनुस्मरेयुः॥२॥

अयुङ्क्षेषु संवत्सरेषु कुर्यादयुङ्गꣳ हि पितृणामेकनक्षत्र एकनक्षत्रꣳ हि पितृणाममावास्यायाममावास्या वा एकनक्षत्रमेको हि यद्वेताꣳ रात्रिꣳ सर्वाणि भूतानि संवसन्ति तेनो तं काममाप्नोति यः सर्वेषु नक्षत्रेषु॥३॥

शरीद कुर्यात् स्वधा वै शरत्स्वधो वै पितृणामन्नं तदेनमन्ने स्वधायां दधाति माघे[5] वा मा नोऽघं[6] भूदिति निदाघे[7] वा नि नोघं[8] धीयाता इति॥४॥

चतुः स्रक्ति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्धन्त ते देवा असुरान्त्सपत्नान्भ्रातृव्यान्दिग्भ्यो-ऽनुदन्त तेऽदिक्काः पराभवꣳस्तस्माद्या दैव्यः प्रजाश्चतुः स्रक्तीनि ताः श्मशानानि कुर्वन्तेऽथ[9] या

१. कल्याणं
२. न्नवदघङ्क र
३. दद्यमेव
४. तदद्यं
५. माघे
६. नोद्यं
७. निदाद्ये
८. नोद्यं
९. कुर्वते

## Chapter Eight

### BRĀHMAṆA I

**1.** They now prepare a *Śmaśāna* (an eternal resting place for the body of the Yajamāna), either as house or as a memo. Whoever dies he is a corpse (*Śava*) and what *Anna* (food) is prepared for that is *Śavānna. Śavānna* (food for the corpse) is what is indirectly called *Śmaśāna. Śmaśāḥ* are those who eat among the *Pitṛs* (deceased ancestors). They destroy in the yonder world, the good deeds of the one for whom *Śmaśāna* is not made. It is for them that he prepares food i.e. *Śmaśānnam. Śmaśānnam* itself is what is indirectly *Śmaśānam.*

**2.** Let him not prepare it too soon (after the death of the Yajamāna); lest his sin should become renewed. Let him do it after some delay; thereby he obscures his sin. (It may be prepared) at a time when people have forgotten him for years and his sins are heard no more (talked about). If they do remember—

**3.** Let him make it in even year (two, four, six etc.) for uneven (years) are of the *Pitṛs.* (It should be made) under a single *Nakṣatra* (a lunar house with single star like *Citrā, Ārdrā* etc. and not *Kṛttikā, Punarvasu* etc.) for the single *Nakṣatras* belong to the *Pitṛs.* In *Āmāvāsya* (new-moon), for *Āmāvāsya* is a single *Nakṣatra,* since in that all the beings live together for that night. The sacrificer is single person. Thereby he obtains that desire which is contained in all the *Nakṣatras.*

**4.** (It should be made) in the autumn season, because (*Śarad*) autumn is *Svadhā* and *Svadhā* is the food of the *Pitṛa.* Thus he unites him (the departed one) along with his food, *Svadhā*; or (he makes) in the month of *Māgha,* thinking, "Let me have not (*Mā*) (*Sin*) (*Agha*), or in summer (*Nidāgha*) thinking let our sin (*Agha*) be removed (*Nidha*)."

**5.** Four-cornered (contruction should be that monument). The gods and the *Asuras,* both of them born of Prajāpati, quarralled in the (four) quarters. Those gods drove away their enemies, the *Asuras,* from quarters. They (*Asuras*) got defeated and were deprived of quarters. That is why people who are of godly nature, prepare their *Śmaśānas,* four cornered and those of Asuric nature, the easterners and others, make theirs circular (dome-shaped); for the

आसुर्यः प्राच्यास्तद्ये त्वत्परिमण्डलानि तेऽनुदन्त ह्येनां दिग्भ्यः उभे दिशावन्तरेण विदधाति प्राचीं च दक्षिणां चैतस्याꣳ ह दिशि पितृलोकस्य द्वारं द्वारैवेनं पितृलोकं प्रपादयति स्रक्तिभिर्दिक्षु प्रतितिष्ठतीतरेणात्मनावान्तरदिक्षु तदेनꣳ सर्वासु दिक्षु प्रतिष्ठापयति॥५॥

अथातो भूमिजोषणस्योदीचीन प्रवणे करोत्युदीची वै मनुष्याणां दिक्तदेनं मनुष्यलोक आभजत्येतद्ध वै पितरो मनुष्यलोक आभक्ता भवन्ति यदेषां प्रजा भवति प्रजा हास्य श्रेयसी भवति॥६॥

दक्षिणाप्रवणे कुर्यादित्याहुर्दक्षिणाप्रवणो वै पितृलोकस्तदेनं पितृलोक आभजतीति न तथा कुर्यादमीवद्ध नाम तच्छ्मशानकरणं क्षिप्रे ह्येषामपरोऽनुप्रैति॥७॥

दक्षिणाप्रवणस्य प्रत्यर्षे कुर्यादित्यु हैक आहुस्तत्प्रत्युच्छ्रितमघं[10] भवतीति नो एव तथा कुर्याद्यद्वा उदीचीनप्रवणे करोति तदेव प्रत्युच्छ्रितमघं[11] भवति॥८॥

यस्यैव समस्य सतोः दक्षिणतः पुरस्तादाप एत्यसꣳस्थायाप्रघ्नत्य एतां दिशमभिनिष्पद्याक्षय्या अपोऽपिपद्येरꣳस्तत्कुर्यादन्नं वा आपोऽन्नाद्यमेवास्मा एतत्पुरस्तात्प्रत्यग्दधात्यमृतमु वा आप एषो ह जीवानां दिगन्तरेण सप्तर्षीणां चोदयनमादित्यस्य चास्तमयनममृतमेव तज्जीवेषु दधाति तद्धैतत्प्रतिमीवन्नाम श्मशान करणं जीवेभ्यो हितं यद्वाव जीवेभ्यो हितं तत्पितृभ्यः॥९॥

कम्वति कुर्यात्कं मेऽसदित्यथो शम्वति शं मेऽसदिति नाधिपथं कुर्यान्नाकाशे नेदाविरघं[12] करवाणीति गुहा सदवतापि स्यात्तद्यद्गुहा भवत्यघमेव तद्गुहा करोत्यथ यदवताप्यसौ वा आदित्यः पाप्मनोऽपहन्ता स एवास्मात्पाप्मानमपहन्त्यथो आदित्यज्योतिषमेवैनं करोति न तस्मिन् कुर्याद्यस्येत्थादनूकाशः स्याद्याचमानꣳ ह नाम तत्क्षिप्रे हैषामपरोऽनुप्रैति चित्रं पश्चात्स्यात्प्रजा वै चित्रं चित्रꣳ हास्य प्रजा

१०. तमद्यं
११. तमद्यं
१२. रद्यं

gods drove them out of the quarters. He contructs it between the two directions; the eastern and southern directions. It is in this direction that the door to the *Pitṛ loka*, the world of the *Pitṛs*, is (situated). He thus enables him to enter the world of the *Pitṛs* through its entrance. He (the deceased) gets established in the quarters by means of the four corners and by his other body (i.e. the monument) he gets established in the intermediate quarters. Thus he gets established in all the quarters.

**6.** Now about choosing the ground. He makes it on a ground sloping towards the north; because north is the direction of men. He thus make him (the deceased) share the human world. The *Pitṛs* get attached to the human world since here they have their progeny (living). By this his progeny prosper well.

**7.** Some say it should slope towards the south, since in the southern direction is the world of the *Pitṛs*. By this he (deceased) is made to share the world of the *Pitṛs*. It should not be done so. Because it (the southern direction) keeps the mouth of the *Śmaśāna* open and (if done so) very soon another member of his family will follow him (to death).

**8.** Some others say, "Let the ground be inclined towards the south but an elevation be made on the south, so that the evil effect (of an open *Śmaśāna*) gets removed." It should not be so. Because only if it is inclined to the north it will be one capable of negating the evil effect.

**9.** Any levelled ground where waters flowing from a south-easterly direction will cease flowing on reaching the north-western side of the plot and without further gushing forth, naturally, mix with the waters already collected there, that will suite for the monument. In that case, water is food and he thereby supplies him (the deceased) with food from the front towards the back. Water is nectar. That region between the spot where the seven *Ṛṣis* rise (the *Saptarṣi* constellation of stars appear) and the spot where the Sun sets is the quarter of the living beings. Thereby he bestows nectar on the living beings. This constitutes a closed *Śmaśāna*, for the good of living beings. What is good for living beings is good for the *Pitṛs*.

**10.** Let him make it on a comfortable spot so that it provides comfort to him. Let it be a peaceful spot so that it may give peace to him. Let him not construct it on a thoroughfare or in an open space, lest he should make his

भवति यदि चित्रं न स्यादापः पश्चाद्वोत्तरतो वा स्युरापो ह्येव चित्रं चित्रꣳ हैवास्य प्रजा भवति॥१०॥

ऊषरे करोति रेतो वा ऊषाः प्रजननं तदेनं प्रजनन आभजत्येतद्ध वै पितरः प्रजनन आभक्ता भवन्ति यदेषां प्रजा भवति प्रजा हास्य श्रेयसी भवति समूले समूलꣳ हि पितृणां वीरिणमिश्रमेतमेतद्धास्याः पित्र्यमनतिरिक्तमथो अघमेव तद्बद्धं[13] करोति॥११॥

न भूमिपाशमभिविदध्यान्न शरं नाश्मगन्धां नाध्याण्डां न पृश्निपर्णीं नाश्वत्थस्यान्तिकं कुर्यान्न बिभीतकस्य न तिलवकस्य न स्फूर्जकस्य न हरिद्रोर्न न्यग्रोधस्य येचान्ये पापनामानो मङ्गलोपेप्सया नाम्नामेव परिहाराय॥१२॥इति प्रथमं ब्राह्मणम्॥

## द्वितीयं ब्राह्मणम्

अथात आवृदेवाग्निविधयाग्निचितः श्मशानं करोति यद्वै यजमानोऽग्निं चिनुतेऽमुष्मै तल्लोकाय यज्ञेनात्मानꣳ सꣳस्कुरुत एतदु ह यज्ञियं कर्मासꣳस्थितमा श्मशानकरणात्तद्यदग्निविधयाग्निचितः श्मशानं करोत्यग्निचित्यामेव तत्सꣳस्थापयति॥१॥

तद्वै न महत्कुर्यान्नेन्महदधं[1] करवाणीति यावानपक्षपुच्छोऽग्निस्तावत्कुर्यादित्यु हैक आहुः समानो ह्यस्यैषआत्मा यथैवाग्नेस्तथेति पुरुषमात्रं त्वेव कुर्यात्तथापरस्मा अवकाशं न करोति पश्चाद्वरीयः

१३. बद्ध
१. दद्यं

अथैनां धूपयत्यश्वस्य त्वा कृष्णः शन्का धूपयामीति वृषा वा अश्वो वीर्यं वै वृषा वीर्येणैवैनमेतत्समर्धयति कृत्स्नं करोति देवयजने पृथिव्या मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वते तूष्णीँ रौहिणकपाले॥१९॥

अथैनाञ्छ्रपयति शृतः हि देवानामिष्टकाभिः श्रपयत्येता वा एतदकुर्वत यथा-यथैतद्यज्ञस्य शिरोऽच्छिद्यत ताभिरेवैनमेतत्समर्धयति कृत्स्नं करोति तदु येनैव सुशृतास्स्युस्तेन श्रपयेदथ पचनमवधाय महावीरमवदधाति मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीँ रौहिणकपाले तां दिवैवोपवपेद्दिवोद्वपेदहर्हि देवानाम्॥२०॥

स उद्वपत्यृजवे त्वेत्यशौ वै लोक ऋजुः सत्यँ ह्यृजुः सत्यमेष य एष तपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाहर्जवे त्वेति॥२१॥

साधवे त्वेत्ययं वै साधुर्योऽयं पवत एष हीमाँल्लोकान्त्सिद्धोऽनुपवत एष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह साधवे त्वेति॥२२॥

सुक्षित्यै त्वेत्ययं वै लोकः सुक्षितिरस्मिन् हि लोके सर्वाणि भूतानि क्षियन्त्यथो अग्निर्वै सुक्षितिरग्निर्ह्येवास्मिँल्लोके सर्वाणि भूतानि क्षियन्त्येष उ तृतीयः प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सुक्षित्यै त्वेति तूष्णीं पिन्वने तूष्णीँ रौहिणकपाले ॥२३॥

**19.** He then applies smoke to them saying "with the dung of the horse the impregnator, I fumigate you." The horse is indeed the impregnator and impregnator means virility. He thus imparts virility and completes it. "On this spot of the earth meant for divine worship; You for the sacrifice; for the head of the sacrifice." It has the same import as before. Similarly he does silently in respect of the other two pots, the two milking bowls and the two *Rauhiṇa* plates.

**20.** He then bakes them; for, what is baked belongs to Gods. He bakes them with bricks; because it was with bricks that (Gods) at that time did, when the head of the sacrifice was cut off. With the same, he thus fashions it and completes it. However he may bake them with whatever material available, so that they are well-baked. Having got ready the baking material, he places the *Mahā Vira* in that saying "you for the sacrifice; you for the head of the sacrifice." The import of this is the same as before. Same way, he does silently in respect of the other two pots, the two milking bowls and the two *Rauhiṇa* plates. He should place them in the kiln (for baking) by day time and should remove them in the day time itself; for the day belongs to Gods.

**21.** He takes it out of the baking kiln saying "I take you for the righteous one." The righteous one is of course the world beyond; for the righteous one means truth and the yonder one who shines is truth. He (the sun) is the foremost *Pravargya* and it is him he thus gratifies and hence he says "I take you for the righteous one."

**22.** "You for the efficient one" (so saying he takes out the second pot). The efficient one (*Sādhu*) is no doubt the one who blows; for he blows through these worlds as a *Siddha* (permanent entity). The second *Pravargya* is that God Vāyu. It is him that he thus gratifies. Hence he says "You for the efficient one."

**23.** "You for a good abode" (So saying he takes out the third *Mahā Vira* pot). This terrestrial world is indeed the good abode; for it is in this world that all creatures exist and the good abode is also Agni. Because it is the fire that enables all creatures to exist in this world and that Agni is the third *Pravargya*. It is him, he thus gratifies. So he says "You for a good abode." He pulls out (from the kiln) the two milking bowls and the two *Rauhiṇa* plates silently.

अथैनानाच्छृणत्यजायै पयसा मखाय त्वा मखस्य त्वा शीर्ष्ण इत्यसावेव बन्धुरेवमितरौ तूष्णीं पिन्वने तूष्णीः रौहिणकपालेऽथैतद्वा आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ॥२४॥इति द्वितीयं ब्राह्मणम्॥

## तृतीयं ब्राह्मणम्

स यदैतदातिथ्येन प्रचरत्यथ प्रवर्ग्येण चरिष्यन्पुरोपसदोऽग्रेण गार्हपत्यं प्राचः कुशान् सꣳस्तीर्य द्वन्द्वं पात्राण्युपपादयत्युपयमनीं महावीरं परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ यदु चान्यद्भवति तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसंपादयत्यथ यद्द्वन्द्वं द्वन्द्वं वै वीर्यं यदा वै द्वौ सꣳरभेते अथ तौ वीर्यं कुरुतो द्वन्द्वं वै मिथुनं प्रजननं मिथुनेनैवैनमेतत्प्रजननेन समर्धयति कृत्स्नं करोति॥१॥

अथाध्वर्युः प्रोक्षणीरादायोपोत्तिष्ठन्नाह ब्रह्मन् प्रचरिष्यामो होतरभिष्टुहीति ब्रह्मा वै यज्ञस्य दक्षिणत आस्तेऽभिगोप्ता तमेवैतदाहाप्रमत्त आस्स्व यज्ञस्य शिरः प्रतिधास्याम इति होतरभिष्टुहीति यज्ञो वै होता तमेवैतदाह यज्ञस्य शिरः प्रतिधेहीति प्रतिपद्यते होता॥२॥

ब्रह्मजज्ञानं प्रथमं पुरस्तादित्यसौ वा आदित्यो ब्रह्मा ब्रह्मा अहरहः पुरस्ताज्जायत एष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह ब्रह्मजज्ञानं प्रथमं पुरस्तादित्यथ प्रोक्षत्यसावेव बन्धुः॥३॥

**24.** He then pours goat's milk upon them saying "You for sacrifice, you for the head of the sacrifice." The meaning of this is the same. In the same way, he pours silently on the two milking bowls and the two *Rauhiṇa* plates . Whosoever, either teaches this (method of preparing the *Pravargya*) or partakes of the contents of the *Pravargya,* reaches that life-span and enters into that effulgence. The observance of the procedure for that is the same as the creation. (Meaning- the preparation of the *Pravargya* is on the same principles as the creations of the three worlds). (Second Brāhmaṇa Ends.)

## BRĀHMAṆA III

**1.** He who intends to perform the *Pravargya* and then the *Upasad,* even while going about with the *Ātithya* (hospitality to Soma as a part of the previous night's ritual), spreads *Kuśa* grass in front of the *Gārhapatya* fire with the tips of the grass pointing to the east and places the appliances and vessels in pairs: The *Upayamanī* tray and the *Mahā Vīra* pot as one pair; the two lifting foreceps as another; the two milking bowls as the third; the two *Rauhiṇa* plates as the fourth and the two *sruks* as the fifth and whatever other appliances there may be - all in pairs. These account for total of ten and the Virāj meter has ten syllables and Virāj is the sacrifice. Thus, he makes it correspond to the Virāj, the sacrifice. As to why they should be in pairs is because, a pair stands for strength; for when two persons hold to each other, they produce vigour and a pair means re-productive union. Thus he supplies it with a productive union and completes it.

**2.** Then the Adhvaryu takes the sprinkling water and moving forward says - "Brahman, we shall proceed; Hotā, recite the praises." For, the Brahman sits on the right side as the guardian of the sacrifice and it is him, he addresses thus. "Be watchful; we are going to restore the head of the sacrifice." Why he says "Hotā, recite the praises" is because the Hotā is the sacrifice. Thus, he tells him – "restore the head of the sacrifice." Accordingly the Hotā recites.

**3.** "The first born in front is the Brahman.........etc." For, the Brahman is indeed the yonder Sun and he is born in front (in the East) day by day and this *Pravargya* also is that Sun. Thus he propitiates him by saying "the first born in front is the Brahman.......etc." He then sprinkles (the vessels) and its significance is the same as before.

स प्रोक्षति यमाय त्वेत्येष वै यमो य एष तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह यमाय त्वेति॥४॥

मखाय त्वेत्येष वै मखो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह मखाय त्वेति॥५॥

सूर्यस्य त्वा तपस इत्येष वै सूर्यो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह सूर्यस्य त्वा तपस इति॥६॥

पूर्वया द्वारा स्थूणां निर्हृत्य दक्षिणतो निमिन्वन्ति यथैनाꣳ होताभिष्टुवन् परापश्येद्यज्ञो वै होता स एवास्यामेतद्यज्ञं प्रतिदधाति तथैषा घर्मं पिन्वतेऽग्रेणाहवनीयꣳ सम्रालासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तराꣳ राजासन्द्यै॥७॥

औदुम्बरी भवत्यूर्ग्वै रस उदुम्बर ऊर्जैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति॥८॥

अꣳसदघ्ना भवत्यꣳसयोर्वा इदꣳ शिरः प्रतिष्ठितं तदꣳसयोरेवैतच्छिरः प्रतिष्ठापयति॥९॥

बाल्बजीभी रज्जुभिर्व्युता भवति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोति॥१०॥

अथ यदुत्तरत आसादयति यज्ञो वै सोमः शिरः प्रवर्ग्य उत्तरं वै शिरस्तस्मादुत्तरत आसादयत्यथो राजा वै सोमः सम्राट् प्रवर्ग्य उत्तरं वै राज्यात्साम्राज्यं तस्मादुत्तरो वै प्रजापतिः तस्मादुत्तरत आसादयति॥११॥

**4.** He sprinkles saying "You for Yama." Yama is indeed the one who shines yonder, since it is he who controls (*Yam*) everything here. By him all these are controlled and this *Pravargya* is also that Sun. It is him he thus propitiates and hence he says "you for Yama ( I sprinkle)."

**5.** "You for Makha" - Makha no doubt is the one who shines yonder and this *Pravargya* is the same as that Sun. Thus he propitiates him and hence he says, "You for Makha (I sprinkle)."

**6.** "You for the *Tapas* of Sūrya ( I sprinkle)." Sūrya is indeed the one who shines yonder, and this *Pravargya* is of course that Sūrya. It is him he thus propitiates and hence he says, "You are for the *Tapas* of the Sūrya."

**7.** Having taken out a pole by the eastern entrance (of the hall), he fixes it into the ground on the southern side in such a way that it is visible to the Hotā while reciting the praises. For, the Hotā is the sacrifice and he thereby restores the sacrifice to this earth and she (earth) causes the *Gharma* milk to rise. Turning the throne seat of the emperor (*Pravargya*) in front of the *Āhavanīya*, he places it on the right side, facing east, towards the north of the throne seat of Soma, the King.

**8.** It is made of *Udumbara* wood; for the *Udumbara* means vigour. Thus with vigour, with essence, he thus enriches and completes it (*Pravargya*).

**9.** It is at the height corresponding to the shoulder, because it is on the shoulders that head is situated. Therefore here he fixes the head on the shoulders.

**10.** It (the *Pravargya*) is wound round by the strings of *Balvaja* grass. When the sacrifice had its head cut off, its essence flowed and from that these plants (*Balvaja* grass) grew. Therefore it is that he enriches it with this essence and completes it.

**11.** As to why he places it to the north of the Soma's seat- Soma is the sacrifice and the *Pravargya* is its head. The head is always at the top (of the body) and hence he places it to the north of the Soma seat. Moreover the Soma is king whereas the *Pravargya* is emperor. The imperial authority is always higher than kingship and therefore he places it to the north of the Soma seat.

स यत्रैताः होतान्वाहाञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रचरणीयं महावीरमाज्येन समनक्ति देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानां प्रसविता सर्वं वा इदं मधु यदिदं किं च तदेनमनेन सर्वेण समनक्ति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति॥१२॥

अथोत्तरतः सिकता उपकीर्णा भवन्ति तद्रजतः हिरण्यमधस्तादुपास्यति पृथिव्याः सःस्पृशस्पाहीत्येतद्वै देवा अबिभयुर्यद्वै न इममधस्ताद्रक्षाःसि नाष्ट्रा न हन्युरित्यग्रेर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणाः रक्षसामपहत्या अथो पृथिव्यु ह वा एतस्माद्बिभयांचकार यद्वै मायं तप्तः शुशुचानो न हिःस्यादिति तदेवास्या एतदन्तर्दधाति रजतं भवति रजतैव[1] हीयं पृथिवी॥१३॥

स यत्रैताः होतान्वाह सःसीदस्व महांइ असीति तदुभयत आदीप्ता मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्तत एता ओषधयो जज्ञिरे तेनैवैनमेतद्रसेन समर्धयति कृत्स्नं करोत्यथ यदुभयत आदीप्ता भवन्ति सर्वाभ्य एवैतद्दिग्भ्यो रक्षाःसि नाष्ट्रा अपहन्ति तस्मिन्प्रवृज्यमाने पत्नी शिरः प्रोर्णुते तप्तो वा एष शुशुचानो भवति नेन्मेऽयं तप्तः शुशुचानश्चक्षुः प्रमुष्णादिति॥१४॥

स प्रवृणक्त्यर्चिरसि शोचिरसि तपोऽसीत्येष वै घर्मो य एष तपति सर्वं वा एतदेष तदेतमेवैतत्प्रीणाति तस्मादाहार्चिरसि शोचिरसि तपोऽसीत्यथास्यामाशिष आशास्तेऽयं[2] वै यज्ञोऽस्यामेवैतदाशिष आशास्ते ता अस्मा इयः सर्वाः समर्धयति॥१५॥

अनाधृष्टा पुरस्तादित्यनाधृष्टा ह्येषा पुरस्ताद्रक्षोभिर्नाष्ट्राभिरग्नेराधिपत्य इत्यग्निमेवास्या अधिपतिं करोति नाष्ट्राणाः रक्षसामपहत्या आयुर्मेदा इत्यायुरेवात्मन्धत्ते तथो सत्सर्वमायुरेति॥१६॥

१. रजतेव MD (Perhaps to same रजतमयीव)
२. आशास्त इयं वै MD

**12.** When the Hotā recites- "whom the priests anoint, as if expanding him.........", he anoints with *ghee* that *Mahā Vīra* which is to be used. He does so saying "May the God Savita anoint you with honey." Savita is the impeller, of Gods and honey stands for everything which is available here. Thus, he anoints him with everything that is available here and Savita the impeller prompts it for him. That is why he says "May the God Savita anoint you with honey."

**13.** Now sand is strewn on the northern side of it. Below that he had placed a plate of silver saying, "protect it from the touch of the earth." For once upon a time the gods were apprehending injury from below to the *Pravargya* from the fearfull *Rakṣasas.* Gold (here silver referred to as white gold) being the seed of Agni, repells the terrible *Rakṣasas.* Indeed, the earth was also scared that this *Pravargya* when heated and glowing, might injure her (the earth). So he keeps it separated from the earth. The metal is white because this earth is white as it where.

**14.** When the Hotā recites - "You sit down: You are great......", sheaths of red grass are kindled on both sides. Throwing them on the mound, he places the *Mahā Vīra* pot on them. When the head of the sacrifice was cut off, its essence flowed out and from that these plants grew. With that same essence he now enriches it and completes it. As to why they (grass) are kindled on both sides is because it would drive away the terrible *Rakṣasas* from all sides. When this pot is being heated, the wife of the Yajamāna covers her head thinking ,"This one, when heated and glowing might affect my eye-sight."

**15.** He places it on (the burning grass) saying, "You are the flame; you are the effulgence; you are the *Tapas.*" The *Gharma* is the one who shines yonder and he (Sun) is indeed all that. He thus pleases him by saying, "You are the flame; you are the effulgence; and you are *Tapas.*" He then seeks blessings on this earth. For, the sacrifice is this earth and on this he seeks the blessings and she (the earth) fulfills all those desires.

**16.** "Un-challenged you are, in the east" - because, this earth in front is free from the onslaught of the *Rakṣasas.* "The overlordship of Agni" which means he makes Agni himself the overlord for destroying the terrible *Rakṣasas.* "Grant me full life-span" and thus he gains the full life-span.

पुत्रवती दक्षिणत इति नात्र तिरोहितमिवास्तीन्द्रस्याधिपत्य इतीन्द्रमेवास्या अधिपतिं करोति नाष्ट्राणाꣳ रक्षसामपहत्यै प्रजां मे दा इति प्रजामेव पशूनात्मन्धत्ते तथो ह पुत्री पशुमान्भवति॥ १७॥

सुषदा पश्चाददितिं नात्र तिरोहितमिवास्ति देवस्य सवितुराधिपत्य इति देवमेवास्यै सवितारमधिपतिं करोति नाष्ट्राणाꣳ रक्षसामपहत्यै चक्षुर्मे दा इति चक्षुरेवात्मन्धत्ते तथो ह चक्षुष्मान् भवति॥ १८॥

आश्रुतिरुत्तरत इत्याश्रावयन्नुत्तरत इत्येवैतदाह धातुराधिपत्य इति धातारमेवास्याधिपतिं करोति नाष्ट्राणाꣳ रक्षसामपहत्यै रायस्पोषं मे दा इति रयिमेव पुष्टिमात्मन्धत्ते तथो ह रयिमान् पुष्टिमान् भवति॥ १९॥

विधृतिरुपरिष्टाददिति विधारयन्नुपरिष्टाददित्येवैतदाह बृहस्पतेराधिपत्य इति बृहस्पतिमेवास्या अधिपतिं करोति नाष्ट्राणाꣳ रक्षसामपहत्या ओजो मे दा इत्योज एवात्मन्धत्ते तथौजस्वी बलवान् भवति॥ २०॥

अथ दक्षिणत उत्तानेन पाणिना निह्नुते विश्वाभ्यो मा नाष्ट्राभ्यस्पाहीति[३] सर्वाभ्यो मार्तिभ्यो गोपायेत्येवैतदाह यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरात्स पितॄनगच्छत्तया वै पितरस्तैरेवैनमेतत्समर्धयति कृत्स्नं करोति॥ २१॥

अथेमामभिमृश्य जपति मनोरश्वासीत्यश्वा ह वा इयं भूत्वा मनुमुवाह सोऽस्याः पतिः प्रजापतिस्तेनैवैनमेतन्मिथुनेन प्रियेण धाम्ना समर्धयति कृत्स्नं करोति॥ २२॥

अथ वैकङ्कतौ शकलौ परिश्रयति प्राञ्चौ स्वाहा मरुद्भिः परिश्रीयस्वेत्यवरꣳ स्वाहाकारं करोति परां देवतामेष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादवरꣳ स्वाहाकारं करोति परां देवतां मरुद्भिः परिश्रीयस्वेति विशो वै मरुतो विशैवैतत्क्षत्रं परिबृꣳहति तदिदं

३. See Notes

**17.** "Possessed of children towards the South" - in this there is nothing unintelligible. "The overlordship of Indra" - by which he makes Indra himself the overlord to destroy the terrible *Rakṣasas.* "Bestow children unto me" - Thus he secures children and cattle for himself and as a result becomes possessed of children and cattle.

**18.** "Well-habitable, on the Western side." There is nothing hidden in this. "The overlordship of God Savita"- Thereby he makes the God Savita the overlord to destroy the terrible *Rakṣasas.* "Confer on me eye-sight" thus he secures eye-sight for himself and thereby becomes possessed of sight.

**19.** "Sphere of hearing, towards the North" by which he means "*Āśrāvaṇa* or the calls during the offerings are audible in the North." "The overlordship of the creator"- thereby he makes the creator the overlord to destroy the terrible *Rakṣasas.* "Bestow growing wealth unto me" - thereby he secures for himself prosperity and hence becomes wealthy and prosperous.

**20.** "*Vidhṛti* (disposition), in the upper region" which amounts to saying disposing off upwards. "The overlordship of Bṛhaspati"; by which he makes Bṛhaspati himself the overlord in destroying the terrible *Rakṣasas.* "Grant me vigour" - by which he gains to himself vigour and as a result, becomes energetic and strong.

**21.** The Yajamāna then lays down his hand on the earth with the palm turned upwards on the right side of the *Mahā Vīra,* saying "protect me from all evil spirits." By this he means "protect me from all worries." When the head of the sacrifice was cut off, its essence flowed out and it reached the *Pitṛs.* The *Pitṛs* are three in number (Vasu for the father, Rudra for the grandfather and Āditya for the great grandfather) and by them he now enriches it and completes it (*Pravargya*).

**22.** While touching her (earth) he mutters "you are the Mare of Manu." Because, having become a Mare, she (the earth) carried Manu and he is her master, Prajāpati. He thus enriches him and completes him with that pair consisting of Manu and the Mare.

**23.** He places twigs of *Vikaṅkata* wood around the *Mahā Vīra.* Two pieces he lays to the east saying "*Svāhā,* be encircled by the Maruts." Here he makes

क्षत्रमुभयतो विशा परिबृल्हं तूष्णीमुदञ्चौ तूष्णीं प्राञ्चौ तूष्णीमुदञ्चौ तूष्णीं प्राञ्चौ त्रयोदश संपादयति॥२३॥

अथ सुवर्णꣳ हिरण्यमुपरिष्टान्निदधाति दिवः सꣳस्पृशस्पाहीत्येतद्वै देवा अबिभयुर्यद्वै न इममुपरिष्टाद्रक्षाꣳसि नाष्ट्रा न हन्युरित्यग्रैर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणाꣳ[४] रक्षसामपहत्या अथो द्यौर्ह वा एतस्माद्बिभयां चकार यद्वै मायं ततः शुशुचानो न हिꣳस्यादिति तदेवास्या एतदन्तर्दधाति हरितं भवति हरिणीव हि द्यौः॥२४॥

अथ धवित्रैराधूनोति मधु मध्विति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेव[५] तत्तद्दधात्यथापसलवित्रिर्धून्वन्ति यज्ञस्य शीर्षच्छिन्नस्य पितृनगच्छत्त्रया वै पितरस्तैरेवैनमेतत्समीरयत्यप वा एतेभ्यः प्राणाः क्रामन्ति ये यज्ञे धुवनं तन्वते पुनः प्रसलवि त्रिर्धून्वन्ति षट् संपद्यन्ते षड्वा इमे शीर्षन्प्राणास्तानेवास्मिन्नेतद्दधाति श्रपयन्ति रौहिणौ स यदार्च्चिर्जायतेऽथ हिरण्यमादत्ते॥२५॥

स यत्रैताꣳ होतान्वाहाप्नस्वतीमश्विना वाचमस्मे इति तदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति स यदि रुचितः स्याच्छ्रेयान्यजमानो भविष्यतीति विद्यादथ यद्यरुचितः पापीयान् भविष्यतीति विद्यादथ यदि नैव रुचितो नारुचितो नैव श्रेयान्न पापीयान् भविष्यतीति विद्याद्यथान्वेव[६] रुचितः स्यात्तथा धवितव्योऽथैतद्वा आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ॥२६॥ इति तृतीयं ब्राह्मणम्॥

४. नाष्ट्राꣳ TE
५. तानेवास्मिन्नेतद्दधाति MD
६. यथात्वेव My

the *Svāhākāra* first and then names the deity. Because the *Svāhākāra* is he who shines yonder and this *Pravargya* is also that one (Sun). Thus, it is him he gratifies and hence he utters the *Svāhākāra* first and the deity last. "Be encircled by Marut"- (meaning) the Maruts are the common people and he thus encircles the princely class by the people and that is why here the *Kṣatra* is surrounded on either sides by the people. Then he silently places (the *Vikaṅkata* twigs) two in number pointing to the North, silently again two of them pointing to the East, silently two pointing to the North and another two facing the East. Thus they account for thirteen.

**24.** Then he places a gold plate on the top of the *Mahā Vīra*, saying - "Protect it from contact with the sky." Once at that time the Gods were affraid that the terrible *Rakṣasas* might smash the *Pravargya* of theirs from above. That gold being the seed of Agni, it would repel the terrible *Rakṣasas*. Indeed, the sky was also afraid of being injured by the heated and glowing *Pravargya*. That is why he keeps it separated from the sky (by the Gold Plates). It is yellow in colour; for, yellow is the colour of the sky.

**25.** He then fans it will a feathery fans three times, saying "*Madhu, Madhu, Madhu.*" Honey means life-breaths. Three are the life breaths; namely the *Prāṇa*, the *Udāna* and the *Vyāna*. He endows it with those three. They then fan it three times in the opposite direction (from the West to the East). The sacrifice had its head cut off and went to the *Pitṛs*. The *Pitṛs* are three in number and it is by means of them that he now fans it. The *Prāṇas* actually abandon those who do the fanning in a sacrifice. They fan again three times from East to West. This makes six and six are the number of the vital airs in the head and it is these he thus lays into it. They cook the two *Rauhiṇa* cakes. When a flame blazes out, he takes out the Gold Plate.

**26.** While the Hotā recites "Successful, Aśvins, make you our voice", the Adhvaryu steps up saying "The *Gharma* is red-hot." If it be red-hot, he may take it that the Yajamāna will become more prosperous (shine). If it is not red hot, he may infer that he will become poorer. If it be neither very red hot nor its reverse, he may conclude that the Yajamāna will be neither very rich nor very poor. But, however one should fan the pot until it is red hot. Whoever, either teaches this (method of the *Pravargya*) or partakes of its contents, he enters that life span and that effulgence. The observance thereof is the same as at the process of creation. (Third Brāhmaṇa Ends.)

## चतुर्थं ब्राह्मणम्

स य एतदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति तदुपोत्थायावकाशैरुपतिष्ठन्ते प्राणा वा अवकाशाः प्राणानेवास्मिन्नेतद्दधाति षड्डुपतिष्ठन्ते षड्वा इमे शीर्षन् प्राणास्तानेवास्मिन्नेतद्दधाति॥१॥

गर्भो देवानामित्येष वै गर्भो देवानां य एष तपत्येष हीदꣳ सर्वं गृभ्णात्येतेनेदꣳ सर्वं गृभीतमेष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह गर्भो देवानामिति॥२॥

पिता मतीनामिति पिता ह्येष मतीनां पतिः प्रजानामिति पतिर्ह्येष प्रजानाꣳ सं देवो देवेन सवित्रा गतेति सꣳ हि देवो देवेन सवित्रा गत सꣳ सूर्येण रोचत इति सꣳ हि सूर्येण रोचते॥३॥

समग्निरग्निना गतेति सꣳ ह्यग्निरग्निना गत सं दैवेन सवित्रेति सꣳ हि दैवेन सवित्रा गत सꣳ सूर्येणारोचिष्टेति सꣳ हि सूर्येणारोचिष्ट॥४॥

स्वाहा समग्निस्तपसा गतेति सꣳ ह्यग्निस्तपसागतावरꣳ स्वाहाकारं करोति परां देवतामसावेव बन्धुः सं दैव्येन सवित्रेति सꣳ हि दैव्येन सवित्रा गत सꣳ सूर्येणारूरुचतेति सꣳ हि सूर्येणारूरुचत॥५॥

ते वा एते त्रयोऽवकाशा भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तेनैवास्मिन्नेतदधाति॥६॥

धर्ता दिवो विभाति तपसस्पृथिव्यामिति धर्ता ह्येष दिवो विभाति तपसस्पृथिव्यां धर्ता देवो

## BRĀHMAṆA IV

**1.** Now when the Adhvaryu gets up and declares "the *Gharma* is red hot, they proceed towards it and worship it with the *Avakāśa* verses." The *Avakāśas* are the *Prāṇas* and thereby he puts the vital airs into it. Six of them (the Yajamāna and the *Ṛtviks* excluding the *Prastotā*) proceed towards it because these vital airs are six in number in the head. It is these that he puts into it.

**2.** He says "You are the child of the gods" which means the child of the gods is really the one that shines. Because he holds (*Garbh*) everything here and by him everything is held (and hence he is *Gṛbha*). The *Pravargya* is also that sun and it is him he thus pleases and that is why he says "You are the child of the gods."

**3.** "You the father of thoughts" - Because the sun is indeed the originator of thoughts. "You the lord of the creatures" for, the sun is indeed the lord of all creatures. "The god has united with the God Savita" - Because the god meaning the *Mahā Vīra* has indeed united with Savita; the sun. "He shines with Sūrya" - because he indeed shines with the sun.

**4.** "Agni has united with Agni" - for the fire has indeed united with Agni (the sun) with the divine Savita - for, he has indeed united with the divine Savita. "He has shone with Sūrya" - indeed he has been shinning along with the sun.

**5.** "Agni has united with his *Tapas, Svāhā*" for, Agni, has come together with his heat. The *Svāhākāra* he utters first and then the name of the deity. The significance of this is the same "with the divine Savita; with Sūrya; he has spread light" for he has indeed united with divine Savita and spread the light along with Sūrya.

**6.** These are the three *Avakāśa* verses, for, there are three vital airs namely, the *Prāṇa*, the *Udāna* and the *Vyāna*; these he lays into it .

**7.** "The supporter of the sky and the supporter of heat on the earth is shining" - Indeed that sun and the *Mahā Vīra* are shining forth as the supporters of the sky and the suppliers of heat on this earth. "The one who sustains the gods, the immortal product of heat" - for he is indeed the divine sustainer

देवानाममर्त्यस्तपोजा इति धर्ता ह्येष देवो देवानाममर्त्यस्तपोजा वाचमस्मे नियच्छ देवायुवमिति यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाह॥७॥

अपश्यं गोपामनिपद्यमानमित्येष वै गोपा देवानां[1] य एष तपत्येष हीदꣳ सर्वं गोपायत्यथो न निपद्यते तस्मादाहापश्यं गोपामनिपद्यमानमित्या च परा च[2] पथिभिश्चरन्तमित्या च ह्येष परा च देवैः पथिभिश्चरन्ति स सध्रीचीः स विषूचीर्वसान इति सध्रीचिश्च ह्येष विषूचीश्च दिशो वस्तेऽथो रश्मीनावरीवर्ति भुवनेष्वन्तरिति पुनः पुनर्ह्येष एषु लोकेषु वरीवर्त्यमानश्चरति विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पत इत्येतस्य सर्वस्य पत इत्येतद्देवश्रुत्वन्देव घर्म देवो देवान्पाहीति नात्र तिरोहितमिवास्ति॥८॥

अत्र प्रावीरनु वां देववीतय इत्यश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहात्र प्रावीरनु वां देववीतय इति मधु माध्वीभ्यां मधु माधूचीभ्यामिति दध्यङ् ह वा आभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मादाह मधु माध्वीभ्यां मधु माधूचीभ्यामिति हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वो अध्वरं दिवि देवेषु धेहीति नात्र तिरोहितमिवास्ति॥९॥

पिता नोऽसि पिता नो बोधीत्येष वै पिता य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह पिता नोऽसि पिता नो बोधीति नमस्ते अस्तु मा मा हिꣳसीरित्याशिषमेवैतदाशास्तेऽथ पत्न्यै शिरोऽपवृत्य महावीरमीक्षमाणां वाचयति त्वष्टृमन्तस्त्वा सपेमेति वृषा वै प्रवर्ग्यो योषा पत्नी

१. देवानां Missing in MD
२. परा पथिभिः MD

of the gods and the immortal one born out of heat. "You may grant speech to us who are devoted to the gods." Speech is no doubt a form of worship and thereby he requests "confer upon us that speech of worship with which we shall please the gods."

**8.** "I see the protector, the one who never rests." He who shines yonder (the sun) is indeed the protector who guards everything here and he never goes to rest. That is why he says "I see the protector, the never resting." "Wandering by the roads here and there" - because he is indeed wandering here and there on the divine paths. "He is clad in the converging and the radiating" - for he indeed converges himself in the gathering and radiating rays, "He moves to and fro within the spheres", because he repeatedly wanders within the hemispheres, "You the lord of all the worlds; you the lord of all thoughts; you the lord of all speech and you the lord of everyone's speech" - It only means "You are the lord of all this universe" "Oh god *Gharma*, you are heard by the gods and you being a god, guard the deities" - in this there is nothing hidden (to be explained).

**9.** "For the divine feast of you two, you grant your approval" this he says with regard to the twin gods, Aśvins; because it was the Aśvins who at that time, restored the head of the sacrifice. It is them he thus pleases by saying "give your approval henceforth for the divine feast of you two." "Honey to the two who are fond of honey; honey to the two who are eager to have honey"- because, it was Dadhyaṅg Ātharvaṇa who recited the Bhrāhmaṇa passage called *Madhu* (honey). This is their favourite abode and it is with that he now approaches them (Aśvins). Hence he says "Honey to the two who are fond of honey; honey to the two who are eager to have honey." "I entreat you to the hearts, you to the mind, you to the sky, you to the sun; while going upwards you lead this sacrifice to the gods in heaven." There is nothing hidden (unclear) in this.

**10.** "You are our father; agreed to be our father" - for he who shines yonder is indeed the father and this *Pravargya* is that sun, whom he thus pleases when he says, "You are our father; agreed to be our father." "My salutations to you; do not harm me" - thereby he only seeks a boon. After that he removes the mantle from the head of the Yajamānā's wife and makes her say while looking at the *Mahā Vīra* - "we will serve you along with *Tvaṣṭā*....etc." The *Pravargya* is masculine and the Yajamānā's wife is a female. Thus he enriches

मिथुनेनैवैनमेतत्प्रजनने समर्धयति कृत्स्नं करोत्यथैतद्वा आयुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ॥१०॥इति चतुर्थं ब्राह्मणम्॥

॥ इति प्रथमोऽध्यायः ॥

it with a productive pair. And thus makes it complete. This indeed is the life-span and is indeed the effulgence. He who recites this or partakes of this *Pravargya*, verily enters that observance which belongs to creation. (Fourth Brāhmaṇa Ends.)

**(Chapter One Ends.)**

# द्वितीयोऽध्यायः

## प्रथमं ब्राह्मणम्

अथातो रौहिणौ जुहोत्यहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहेत्युभावेतेन यजुषा प्रातारात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहेत्युभावेतेन यजुषा सायम्॥१॥

तद्यद्रौहिणौ जुहोत्यग्निश्च ह वा आदित्यश्च रौहिणावेताभ्याꣳ हि देवताभ्याꣳ यजमानाः स्वर्गं लोकꣳ रोहन्ति॥२॥

अथो इमौ वै लोकौ रौहिणावादित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्राभ्यां[1] परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां[2] परिगृहीतः॥३॥

अथो अहोरात्रे वै रौहिणावादित्यः प्रवर्ग्योऽमुं तदादित्यमहोरात्राभ्यां परिगृह्णाति तस्मादेषोऽहोरात्राभ्यां परिगृहीतः॥४॥

अथो चक्षुषी वै रौहिणौ शिरः प्रवर्ग्यः शीर्षꣳस्तच्चक्षुर्दधाति॥५॥

अथ रज्जुमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददेऽदित्यै रास्नासीत्यसावेव बन्धुः॥६॥

अथ गामाह्वयति जघनेन गार्हपत्यं यन्त्रिळ एह्यदित एहि सरस्वत्येहीतीळा हि गौरदितिर्हि गौः सरस्वती हि गौः॥७॥

अथो तैराह्वयति नाम्नासावेह्यसावेह्यसावेहीति[3] त्रिस्तामागतामभिदधात्यदित्यै रास्नासीन्द्राण्या उष्णीषो विश्वरूपतमः सोऽसीति तदाह तमेवास्या एतत्करोति[4]॥८॥

१. आदित्यमाभ्यां परि TE

२. तस्मादेष आभ्यां TE

३. See Notes

४. तमेवैनमेतत्करोति MD

## Chapter Two

### BRĀHMAṆA I

**1.** Then he offers the two *Rauhiṇa Puroḍāśas* saying "Let the day be pleased with its brightness; the well-lighted one with its effulgence - *Svāhā.*" With this text both the *Puroḍāśas* are offered in the morning. "May the night be happy with its brightness; the well-lighted with its effulgence - *Svāhā*" so saying in the evening, he offers.

**2.** As to why he offers the two *Rauhiṇas* is because the *Rauhiṇas* are Agni and Sun. With these two deities the Yajamāna ascends (*Ruh*) to the heavens.

**3.** Moreover these two worlds are *Rauhiṇas* and the sun is the *Pravargya.* Thereby he encompasses the sun by these two. And in this way, this one is encompassed by the two worlds.

**4.** The *Rauhiṇas* are the day and night and the *Pravargya* is the sun. Thus this sun is enclosed by the day and night and it thus get covered by day and night.

**5.** The *Rauhiṇas* are the two eyes and the *Pravargya* is the head. Thereby he provides the head with a pair of eyes.

**6.** He now takes up a rope saying "At the impulse of the divine Savita, I take you, with arms of the Aśvins, with the hands of Pūṣa; you are the girdle of Aditi." The mystic meaning of this is the same as before.

**7.** He then summons the cow while stepping behind the *Gārhapatya* saying, "Iḍā ! come here; Aditi, come here; Sarasvatī, come here." Because, the cow is Iḍā, the cow is Aditi and the cow is Sarasvatī.

**8.** He also calls her by its name saying "You... so and so... come here...". Thus he calls here thrice. When she has come, he puts the rope round her horns saying, "You are the Aditi's girdle and you are the head-ban of Indrāṇī; you are of all colours" by this he makes it so.

अथ वत्समुपार्जति पूषासीत्ययं वै पूषा योऽयं पवत एष वा[5] इदꣳ सर्वं पुष्यति यदिदं किञ्च[6] एष उ प्रवर्ग्यः तदेतमेव तत्प्रीणाति धर्षत्येष वा एतासां प्राप्रयिता तस्मादाह पूषासीति॥९॥

अथोन्नयति घर्माय दीष्वेत्येष वा अत्र घर्मो रसो भवति यमेषा पिन्वते तस्यै दयस्वेत्येवैतदाह॥१०॥

अथ पिन्वते पिन्वयत्यश्विभ्यां पिन्वस्वेत्यश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहाश्विभ्यां पिन्वस्वेति॥११॥

सरस्वत्यै पिन्वस्वेति वाग्वै सरस्वती वाचा वा एतदश्विनौ यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाह सरस्वत्यै पिन्वस्वेति॥१२॥

इन्द्राय पिन्वस्वेतीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतदाश्विनौ यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहेन्द्राय पिन्वस्वेति॥१३॥

अथ विपृषोऽभिमन्त्रयते[7] स्वाहेन्द्रवत्स्वाहेन्द्रवदितीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणाति तस्मादाह स्वाहेन्द्रवत्स्वाहेन्द्रवदिति[8] त्रिष्कृत्व आह त्रिवृद्धि यज्ञोऽवरꣳ स्वाहाकारं करोति परां देवतामसावेव बन्धुः॥१४॥

अथास्यै स्तनमभिपद्यते यस्ते स्तनः शशयो यो मयोभूरिति यस्ते स्तनो निहितो गुहायामित्येवैतदाह यो रत्नधा वसुविद्यः सुदत्र इति यो धनानां दाता वसुवित्पणाय्य इत्येवैतदाह येन विश्वा पुष्यसि वार्याणीति येन सर्वान्देवान्त्सर्वाणि भूतानि बिभर्षीत्येवैतदाह सरस्वति तमिह धातवेऽकरिति

५. एष हीदꣳ TE
६. See Notes
७. विप्रुषो MD
८. See Notes

**9.** He then lets the calf to suck it saying, "You are Pūṣa" for Puṣa is indeed the one who blows here (the Vāyu); for that one supports or encourages (Puṣa) all this universe. This *Pravargya* also is the same as that Vāyu. He thereby pleases him by doing so and he is the one who leads all these, so he says "You are the Pūṣa."

**10.** He then leads the calf away (from the udder of the cow) saying, "provide (milk) for the *Gharma*." The *Gharma* doubtless is that essence which this cow secrets and thereby he means to say, "Allow a share for her."

**11.** He then lets the milk flow into the milking bowl saying, "flow down for the Aśvins." This he says with regard to the Aśvins, because the Aśvins restored the head of the sacrifice and they are the ones he pleases now. Hence he says, "Flow down for the Aśvins."

**12.** "Flow down for Sarasvatī." Sarasvatī is indeed speech and it is by means of speech that the Aśvins restored the head of the sacrifice. Now he only pleases those (Aśvins and Sarasvatī) when he says, "Flow down for Sarasvatī."

**13.** "Flow down for Indra." Indra is the deity of the sacrifice and it is with the help of the deity of the sacrifice that two Aśvins restored the head of the sacrifice. Thus he pleases those two (Aśvins and Indra) when he says, "Flow down for Indra."

**14.** He then chants the consecrating *mantras* for the split drops (of milk towards the close of the milking), "*Svāhā* to the one possessed of Indra; *Svāhā* to the one possessed of Indra." Indra is indeed the lord of the sacrifice and he thus pleases him who is the lord of the sacrifice. Hence he says, "*Svāhā Indravat*; *Svāhā Indravat*." He repeats this three times for the sacrifice is three fold. The *Svāhākāra* he utters first and then the deity for whom it is meant. The signifcance of this is the same as before.

**15.** He then touches her (cow's) udder saying, "you ever-flowing and liberal udder" that is to say "this udder of yours which is concealed as it were is a giver of wealth and a treasure of riches and never exhausting." By this he means "It is a giver of treasures, bestower of wealth and precious." "You enhance the availability of all desired things(which means to say)" "You support all the gods and all creatures." He then says, "Oh Sarasvatī, move that (udder) to us for sucking." Sarasvatī is indeed speech and this cow which yields the milk for *Gharma* is also speech. Sacrifice is speech and so it amounts to "Grant

वाग्वै सरस्वती सैषा घर्मदुघा यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान्प्रीणामेत्येवैतदाहाथ गार्हपत्यस्यार्धमैत्युर्वन्तरिक्षमन्वेमीत्यसावेव बन्धुः॥१५॥

अथ शफावादत्ते गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसीति गायत्रेण चैवैनावेतत्रैष्टुभेन च छन्दसादत्ते द्यावापृथिवीभ्यां त्वा परिगृह्णामीतीमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णात्यथ मौञ्जेन वेदेनोपमार्ष्ट्यसावेव बन्धुः॥१६॥

अथोपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीत्यन्तरिक्षं वा उपयमन्यन्तरिक्षेण हीदꣳ सर्वमुपयतमथो उदरं वा उपयमन्युदरेण हीदꣳ सर्वमन्नाद्यमुपयतं तस्मादाहान्तरिक्षेणोपयच्छामीति॥१७॥

अथाजाक्षीरमानयति तप्तो वा एष शुशुचानो भवति तमेवैतच्छमयति तस्मिंछान्ते गोक्षीरमानयतीन्द्राश्विनेतीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तामेवैतत्प्रीणात्यश्विनेत्यश्विनावेवैतदाहाश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति तस्मादाहेन्द्राश्विनेति मधुनः सारधस्येत्येतद्वै मधु सारघं घर्मं पातेति रसं पातेत्येवै तदाह वसव इत्येते वै वसव एते हीदꣳ सर्वं वासयन्ते यजत वाळिति तद्यथा वषट्कृतꣳ हुतमेवमस्यैतद्भवति॥१८॥

स्वाहा सूर्यस्य रश्मये वृष्टिवनय इति सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्ति तमेवैतत्प्रीणाति तस्मादाह स्वाहा सूर्यस्य रश्मये वृष्टिवनय इत्यवरꣳ स्वाहाकारं करोति परां देवतामसावेव बन्धुरथैतद्वा वायुरेतज्ज्योतिः प्रविशति य एतमनु वा ब्रूते भक्षयति वा तस्य व्रतचर्या या सृष्टौ॥१९॥इति प्रथमं ब्राह्मणम्॥

us the sacrifice with which we may please the Gods." He then walks to the side of the *Gārhapatya* saying, "I move along the wide aerial region"; the mystic significance of this is the same as before.

**16.** He takes up the two *Śaphas* (the lifting foreceps) saying, "You are the Gāyatrī metre; you are the Tṛṣṭhubh metre." He thus takes them with both the Gāyatrī and the Tṛṣṭhubh metre. "I handle you by means of the Heaven and Earth" for, the two foreceps are indeed the Heaven and Earth and the *Pravargya* is the sun. Thus he encompasses this sun by means of the Heaven and the Earth. After that, he wipes the pot with a bunch of *Muñja* grass and its significance is the same.

**17.** He then places it (the *Pravargya*) on the *Upayamanī* (a tripot with a cavity on the top to hold the vessel of *Pravargya*). He says, "by the aerial region I hold you"; because the *Upayamanī* is the aerial region, since everything here is supported by the ether. The *Upayamanī* is also the belly, since all these food etc., are held by the belly. So he says, "I hold you by the aerial region."

**18.** He then pours the goat's milk; for that *Mahā Vīra* when heated becomes red hot. He soothes it and when it is cooled he pours the cow's milk into it. While pouring the cow's milk he says, "Oh Indra and Aśvins" for Indra is the lord of the sacrifice and thus he pleases him, the lord of the sacrifice. He says, "You Aśvins" because the Aśvins at that time, restored the head of the sacrifice and it is them he now pleases. So he says, "Oh Indra and you Aśvins." "Honey of bees; you the *Gharma* drink" this is indeed honey which is the essence and is offered to the *Gharma*. "You Vasus" for these are indeed Vasus that contain all this Universe. "Worship you, *Vāḍ*" thus this comes to be as if it were offered with a *Vaṣaṭkāra* (normally the *Vaṣatkāra* is only for deities and that too when the offering is made into the fire. In the case of the offering into the *Mahā Vīra* pot, it is used as an exceptional case).

**19.** "*Svāhā* to the ray of Sūrya, the rain - producer" for one of the sun's rays is called *Vṛṣṭivanī* (producer of rain) by which he supports all these creatures. That one (ray) he now pleases. Hence he says "*Svāhā* to the ray of the sun, the rain producer". Here too he utters the *Svāhākāra* first and then the deity and its significance is the same. Whoever either recites (teaches) or consumes this *Pravargya*, enters that Vāyu; that effulgence and the observance thereof is the same in the creation. (First Brāhmaṇa Ends.)

## द्वितीयं ब्राह्मणम्

स यत्रैताꣳ होतान्वाह प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृतेति तदध्वर्युः प्राङुदायन्वातनामानि जुहोत्येतद्वै देवा अबिभयुर्यद्वै न इममन्तरा रक्षाꣳसि नाष्ट्रा न हन्युरिति तमेतत्पुरैवाहवनीयात् स्वाहाकारेणाजुहवुस्तꣳ हुतमेव सन्तमग्नावजुहवुस्तथो एवैनमेष एतत्पुरैवाहवनीयात्स्वाहाकारेण जुहोति तꣳ हुतमेव सन्तमग्नौ जुहोति॥१॥

समुद्राय त्वा वाताय स्वाहेत्ययं वै समुद्रो योऽयं पवत एतस्माद्वै समुद्रात्सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्मा एवैनं जुहोति तस्मादाह समुद्राय त्वा वाताय स्वाहेति॥२॥

सरिराय त्वा वाताय स्वाहेत्ययं वै सरिरो योऽयं पवत एतस्माद्वै सरिरात्सर्वे देवाः सर्वाणि भूतानि सहेरते तस्मा एवैनं जुहोति तस्मादाह सरिराय त्वा वाताय स्वाहेति॥३॥

अनाधृष्याय त्वा वाताय स्वाहाऽप्रतिधृष्याय त्वा वाताय स्वाहेत्ययं वा अनाधृष्योऽप्रतिधृष्यो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाहानाधृष्याय त्वा वाताय स्वाहाऽप्रतिधृष्याय त्वा वाताय स्वाहेति॥४॥

अवस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेत्ययं वा अवस्युरशिमिदो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाहावस्यवे त्वा वाताय स्वाहाशिमिदाय त्वा वाताय स्वाहेति॥५॥

इन्द्राय त्वा वसुमते रुद्रवते स्वाहेत्ययं वा इन्द्रो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाहेन्द्राय त्वेति वसुमते रुद्रवत इति तदिन्द्रमेवानु वसूꣳश्च रुद्राꣳश्चाभजत्यथो प्रातःसवनस्य चैवैतन्माध्यन्दिनस्य च सवनस्य रूपं क्रियते॥६॥

इन्द्राय त्वादित्यवते स्वाहेत्ययं वा इन्द्रो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाहेन्द्राय त्वेत्यादित्यवत इति तदिन्द्रमेवान्वादित्याना भजत्यथो तृतीयसवनस्यैवैतद्रूपं क्रियते॥७॥

## BRĀHMAṆA II

1.When the Hotā, recites, "Let Brahmaṇaspati go to the front, let the goddess *sūnṛtā* come forward" the Adhvaryu makes the offering by chanting the names of Vāyu. For, on this occassion the gods fear that the terrible *Rakṣasas* might injure the *Pravargya* in the middle of the sacrifice and so they offered it with *Svāhākāra* in the beginning before it is taken to the *Āhavanīya*, by offering like this and then they offered it again into the fire. In the same way this Yajamāna offers it with *Svāhākāra* in the beginning when it is taken to *Āhavanīya* and then offers it in the fire.

2. "To the ocean, you the wind - *Svāhā*". This ocean is indeed the one that blows here and hence all these gods and all these creatures emerge (*Samudra*) from the ocean and it is to him (Vāyu) he thus offers it and says, "to the ocean you the wind- *Svāhā*".

3. "To the flood, you the wind - *Svāhā*". This one that blow is indeed the flood and it is from this flood that all the gods and all creatures emanate (*Samīrate*); it is to him he thus offers and says, "To the flood you the wind- *Svāhā*."

4. "To the unshakable you the wind - *Svāhā*." This one who blows is indeed unshakable and therefore to him he thus offers by saying, "To the unshakable you wind- *Svāhā*."

5. "To the irresistable, you the wind - *Svāhā*". This one who blows indeed the *Avasyu* (irresistable) and hence to him he offers thus by saying, "to the irresistable, you the wind- *Svāhā*."

6. "To Indra the Lord of Vasūs and Rudras - *Svāhā*." This one who blows is indeed Indra and to him this offering is made by saying, "To Indra the lord of Vasus and Rudras." This certainly reaches Indra himself along with Vasus and the Rudras. This much is for morning *Savana* and now for the midday *Savana*.

7. "To Indra, the Lord of Ādityas - *Svāhā*." This one which blows is indeed Indra and to him this offering is made by saying, "To Indra." He says, "To the Lord of Ādityas" and thereby he makes it reach Indra along with the Ādityas. This way he makes it in the form of the third *Savana*.

इन्द्राय त्वाभिमातिघ्ने स्वाहेत्ययं वा इन्द्रो योऽयं पवते तस्या एवैनं जुहोति तस्मादाहेन्द्राय त्वेत्यभिमातिघ्न इति सपत्नो वा अभिमातिरिन्द्राय त्वा सपत्नघ्न इत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष उद्धार ऋते देवेभ्यः॥८॥

सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहेत्ययं वै सविता योऽयं पवते तस्मा एवैनं जुहोति तस्मादाह सवित्रे त्वेत्यृभुमते विभुमते वाजवत इति तदस्मिन् विश्वान्देवानन्वाभजति॥९॥

बृहस्पतये त्वा विश्वदेव्यावते स्वाहेत्ययं वै बृहस्पतिर्योऽयं पवते तस्मा एवैनं जुहोति तस्मादाह बृहस्पतये त्वेति विश्वदेव्यावत इति तदस्मिन्विश्वान्त्सर्वान्देवानन्वाभजति॥१०॥

यमाय त्वाङ्गिरस्वते पितृमते स्वाहेत्ययं वै यमो योऽयं पवते तस्मा एवैनं जुहोति तस्मादाह यमाय त्वेत्यङ्गिरस्वते पितृमत इति यज्ञस्य शीर्षच्छिन्नस्य रसोऽक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तानेवास्मिन्नेतदन्वाभजति॥११॥

द्वादशैतानि नामानि भवन्ति द्वादश वै मासाः संवत्सरस्य संवत्सर एव य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्माद्द्वादश भवन्ति॥१२॥

अथोपयमन्या महावीर आनयति स्वाहा घर्मायेत्येष वै घर्मो य एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह स्वाहा घर्मायेत्यवरः स्वाहाकारं करोति परां देवतामसावेव बन्धुः॥१३॥

आनीते जपति स्वाहा घर्मः पित्र इति यज्ञस्य शीर्षच्छिन्नस्य रसो व्यक्षरत्स पितॄनगच्छत्त्रया वै पितरस्तानेवैतत्प्रीणात्यवरः स्वाहाकारं करोति परां देवतामसावेव बन्धुः॥१४॥

नानुवाक्यामन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाहातिक्रम्याश्राव्याह घर्मस्य यजेति वषट्कृते जुहोति विश्वा आशा दक्षिणसदिति सर्वा आशा दक्षिणसदित्येवैतदाह सर्वान्देवानयाळिहेति सर्वान्देवानयाक्षीदिहेत्येवैतदाह स्वाहाकृतस्य घर्मस्य मधोः

8. "To Indra, the slayer of evil-doers - *Svāhā.*" This one who blows is indeed Indra and hence it is offered to him by saying, "To Indra." By saying, "the slayer of evil-doers" he means the enemies as evil doers and in effect he says "The killer of enemies." This is Indra's special share because as the Lord of the Gods, he has a special share as different from those two others.

9. "To Savita, you the lord of the Ṛbhus, the Lord of Vibhus and the possessor of the *vājas* (prowess)- *Svāhā.*" This one who blows is indeed Savita and to him it is offered and so he says, "To you the Savita." By saying, "Lord of Ṛbhus, Lord of Vibhus and possessor of Vāja, he involves all the gods."

10. To Bṛhaspati, accompanied by the Viśvedevas - *Svāhā.*" This one who blows is indeed Bṛhaspati and to him it is offered so he says, "To you Bṛhaspati." By saying accompanied by Viśvedevas, he includes all the gods in this.

11. "To Yama, leader of the Aṅgiras and of the *Pitṛs* - *Svāhā.*" This one who blows is indeed Yama and so he says, "To Yama." When he says the leader of Aṅgiras and of the *Pitṛs* he means that when head of the sacrifice was cut off and the fluid oozed out, it reached the *Pitṛs* and they are three in number and they are three *Pitṛs* included in this.

12. Thus there are twelve names (of Vāyu) and there are twelve months for a year. This one who burns (Sūrya) is indeed the year and he is the *Pravargya* and he thus pleases him by these offerings. That is why there are twelve offerings.

13. Now by means of the *Upayamanī*, he brings the *Mahā Vira* saying "*Svāhā* to the *Gharma.*" This one who burns is indeed *Gharma* and he is the *Pravargya.* Him he thus pleases when he says, "*Svāhā* to *Gharma.*" Here too he utters *Svāhākāra* and then names the diety and its significance is the same.

14. When it has been poured into it, he says "*Svāhā-Gharma* to the *Pitṛs.*" When head of the sacrifice was cut off, its fluid oozed out and it reached the *Pitṛs.* The *Pitṛs* are of three types and they are thus satisfied. The *Svāhākāra* is done first and then the deity is named. Its significance is the same.

15. He does not recite any invitatory formula, because the *Pitṛs* have once

पिबतमश्विनेत्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणात्यवरꣳ स्वाहाकारं करोति परां देवतामसावेव बन्धुः॥१५॥

अथ हुत्वोर्ध्वमुत्कम्पयति दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यसौ वा आदित्यो घर्मो यज्ञो दिवि वा एष हितो दिवि प्रतिष्ठितस्तमेवैतत्प्रीणाति तस्मादाह दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इत्यनुवषट्कृते जुहोति स्वाहाग्नये यज्ञियायेति तत्स्विष्टकृद्भाजनमग्निर्हि खिष्टकृच्छं यजुर्भ्य इति यजुर्भिर्ह्येषोऽस्मिँल्लोके प्रतिष्ठितस्तान्येवैतत्प्रीणात्यवरꣳ स्वाहाकारं करोति परां देवतामसावेव बन्धुः॥१६॥

अथ ब्रह्मानुमन्त्रयते ब्रह्मा वा ऋत्विजां भिषक्तमस्तद्य एवर्त्विजां भिषक्तमस्तेनैवैनमेतद्यज्ञं भिषज्यत्यश्विना घर्मं पातमित्यश्विनावेवैतदाहाश्विनौ ह्येतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत्प्रीणाति हार्द्वानमहर्दिवाभिरूतिभिरित्यनिरुक्तमनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञं भिषज्यति तन्त्रायिण इत्येष वै तन्त्रायी य एष तपत्येष हीमाँल्लोकाꣳस्तन्त्रमिवानुसञ्चरत्येष उ प्रवर्ग्यस्तदेतमेवैतत्प्रीणाति तस्मादाह तन्त्रायिण इति नमो द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यां नमस्करोति[1] ययोरिदꣳ सर्वमधि॥१७॥

अथ यजमानो यज्ञो वै यजमानो यज्ञेनैवैतद्यज्ञं भिषज्यत्यपातामश्विना घर्ममित्यश्विनावेवैतदाहाश्विनौ

१. निह्नुते MD

